*जातमहद्वृद्धादुक्ष्णो ये ॥१०१॥ जातादिपूर्वादुक्षन्शब्दादत्त्वं स्यात् यसे । जातश्चासौ उक्षा च जातोक्षः । महोक्षः । वृद्धोक्षः । य इति किं ? जातस्योक्षा-जातोक्षा ।

*स्त्रियाः पुंसो द्वंद्वे च ॥१०२॥ स्त्रीशब्दात् परात् पुंसोऽत्त्वं स्यात् द्वंद्वे ये च । स्त्री च पुमांश्च स्त्रीपुंस । स्त्रीपुंसा विस्मयं गताः। यसे—स्त्रीभूत्वा पुमान् जातः स्त्रीपुंसःशिखंडी ।

*वाग्धेनुदारान् मनोऽनडुद्गोः ॥१०३॥ वागादिपूर्वेभ्यः मन आदिभ्योऽत्त्वं स्यात् द्वंद्वे । वाक् च मनश्च वाङ्मनसे । धेन्वनुडुहौ ।दारगवं ।

*ऋचः सामयजुर्भ्यां ॥ १०४ ॥ ऋचः पराभ्यां सामयजुर्भ्यामद् भवति । ऋक् च साम च ऋक्सामं । ऋग्यजुषं ।

नक्तंरात्रिमहोभ्यो दिवं ॥१०५॥ एभ्यः परं दिवमिति निपात्यते । नक्तं च दिवा च नक्तंदिवं । रात्रिंदिवं । अहर्दिवं ।

*पदष्ठीवोर्वष्ठीवाक्षिभ्रुवं ॥१०६॥ पदष्ठीवादयो निपात्यंते अदंताः । पादौ चाष्ठीवंतौ च पदष्ठीवं । पद्भावाष्ठिवं च । ऊरू चाष्ठीवंतौ च ऊर्वष्ठीवं । अक्षिणी च भ्रुवौ च आक्षिभ्रुवं ।

*चुदहषो रार्थे ॥१०७॥ च्वाद्यंतात् रार्थे समाहारलक्षणे द्वंद्वे अट् भवति । वाक् च त्वग् च वाक्त्वचं । श्रीस्रजं । वाग्दृषदं । छत्रोपानहं । वाक्त्विषं । रार्थ इति किं । प्रावृट्शरदौ ।

षेऽगुलेर्झिस्य्यादेः ॥ १०८ ॥ झ्यादेः स्य्यादेःचांगुलेरत्त्वं स्यात् षसे । निर्गतमंगुलिभ्यः निरंगुलं । अंगुलेरतिक्रांतं-अत्यंगुलं । द्वयोरंगुल्योः समाहारः-द्व्यंगुलं । त्र्यंगुलं । ष इति किं?पंचांगुलिर्हस्तः ।

*सर्वांशाह्नःसंख्यातपुण्याच्च रात्रेः॥ १०९ ॥ सर्वादेः परात् झिस्य्यादेश्च रात्रिशब्दात् अत्त्वो भवति षसे । सर्वा चासौ रात्रिश्च सर्वरात्रं । पूर्वं रात्रेः-पूर्वरात्रः । अपररात्रः । अर्धरात्रः । अहश्च रात्रिश्च-अहोरात्रं । संख्यातरात्रः । पुण्यरात्रः । अतिरात्रः ।नीरात्रः । द्विरात्रः।त्रिरात्रः ।

*वर्षादीर्घात् ॥ ११० ॥ वर्षादीर्घपूर्वायाः रात्रेरद् भवति । वर्षारात्रः । दीर्घरात्रः ।

एभ्योऽह्नोऽह्नः ॥१११॥ एभ्यः सर्वादिभ्यः परस्याहन्शब्दस्याह्नादेशो भवति । सर्वमहः सर्वाह्नः । पूर्वाह्नः । अपराह्नः । निःक्रांताह्नः निरह्नी कथा । अष्टस्वहस्सु भवा-अष्टाह्नी पूजा ।

न समाहारे ॥ ११२ ॥ समाहारलक्षणे सेऽह्नोऽन्हो न भवति । द्वयोरह्नोः समाहारः द्व्यहः । त्र्यहः । समाहार इति किं ? द्वयोरह्नोर्भवः द्व्यह्नः उत्सवः । त्र्यह्नी पूजा ।

पुण्यैकात् ॥ ११३ ॥ आभ्यां परस्याह्नोऽह्नो न भवति । पुण्यमहः—पुण्याहं । एकाहः ।

*संख्याताद्वा ॥११४॥ अस्मात्परस्याह्नोऽह्नो न वा स्यात् । संख्यातमहः—संख्याताह्नः । संख्याताहः ।

राजाहःसखेष्टः ॥ ११५॥राजाद्यंतात् षात् टो भवति । जिनराजः । महाराजः । द्व्यहः षटः । परमाहः । राजसखः । अतिसखः ।

उरसोऽग्रे ॥ ११६ ॥ उरसष्टो भवत्यग्रे प्रधानेऽर्थे । हस्तिन उरः—हस्त्युरसं । अश्वोरसं ।

सरोऽनोऽश्मायसः खुजात्योः ॥ ११७॥ एभ्यः खौ जातौ च टो भवति षसे । जालमिव सरः—जालसरसं । मंडूकसरसं । उपानसं । महानसं । कनकाश्मः । स्थूलाश्मः । लोहितायसं । तीक्ष्णायसं ।

निःश्रेयसः ॥ ११८ ॥ निसः परात् श्रेयसः टो भवति । निश्चितं श्रेयः-निःश्रेयसं ।

श्वसो वसीयसश्च ॥११९ ॥ श्वसः परात्

वसीयसः श्रेयसश्च टो भवति षे। शोभनं वसीयः श्वोवसीयसं ते भूयाः । श्वःश्रेयसमस्तु ते ।

**ग्रामकौटात् तक्ष्णः** ॥ १२० ॥ आभ्यां तक्ष्णः टो भवति। ग्रामस्य तक्षा—ग्रामतक्षः । कुट्यां भवः-कौटः,कौटस्तक्षा कौटतक्षः ।

**शुनोऽतेः** ॥ १२१ ॥ अतेः परस्य शुनः टो भवति । श्वानमतिक्रांतोऽतिश्वः वराहः । सेवकश्च ।

***गौणात्** ॥१२२॥ गौणादुत्तरस्य शुनष्टो भवति षे । व्याघ्र इव श्वा व्याघ्रश्वः । सिंहश्वः ।

**अजीवे** ॥ १२३ ॥ अजीवे वर्तमानात् गौणात् शुनष्टो भवति । आकर्षः श्वा इव आकर्षश्वः । फलकश्वः । शकटश्वः । अजीव इति किं ? कालकश्वा ।

**मृगोत्तरपूर्वाच्च सक्थ्नः** ॥ १२४ ॥ एभ्यो गौणाच्च परात् सक्थ्नष्टो भवति । मृगस्येव सक्थि-मृगसक्थं । उत्तरस्येव सक्थि-उत्तरसक्थं पूर्वसक्थं । फलकमिव सक्थि-फलकसक्थं ।

**गोरहृदुपि** ॥ १२५॥ गोशब्दाट्टो भवति अहृदुपि । पुंगवः। राजगवः । पंचगवप्रियः । दशानां गवां समाहारः-दशगवं । गामतिक्रांता अतिगवी । अहृदुपीति किं ? पंचभिर्गोभिः क्रीतः पंचगुः ।

**नावो रात्** ॥ १२६ ॥ नावंताद् रसाद् टो भवति । द्वयोर्नावोः समाहारः-द्विनावं । त्रिनावं। रादिति किं ? राजनौः ।

**अर्द्धात्** ॥ १२७ ॥ अर्द्धात् परात् नावष्टो भवति । अर्द्धनावः । अर्द्धनावी । अर्द्धनावं।

**खार्या वा** ॥ १२८ ॥ खारीशब्दांतात् राट्टो भवति सांतः अर्द्धाच्च वा । द्वे खार्यौ समाहृते-द्विखारं,द्विखारि। पंचखारं, पंचखारि । अर्द्धखारं, अर्द्धखारि ।

**द्वित्रेरंजलेः** ॥ १२९ ॥ द्वित्रिपूर्वादंजलेष्टो भवति । द्वयोरंजल्योः समाहारः-द्व्यंजलं।त्र्यंजलं।

**आयुषः समाहारे** ॥ १३० ॥ ताभ्यामायुषः समाहारे टो भवति । द्वयोरायुषोः समाहारः द्व्यायुषं । त्र्यायुषं।समाहार इति किं?द्व्यायुः प्रियः।

***पुरुषात्** ॥ १३१ ॥ अस्मात् परादायुषः टो भवति षे । पुरुषस्यायुः-पुरुषायुषं ।

**ब्रह्मणो राष्ट्रेभ्यः**॥१३२॥राष्ट्रवाचिभ्यःपरात् ब्रह्मणष्टो भवति से।सुराष्ट्रेषु ब्रह्मा-सुराष्ट्रब्रह्मः।अवंतिब्रह्मः । राष्ट्रेभ्य इति किं ? देवब्रह्मा नारदः।

**कुमहद्भ्यां वा** ॥१३३॥ आभ्यां ब्रह्मणष्टो वा स्यात् । कुत्सितो ब्रह्मा कुब्रह्मः, कुब्रह्मा । महाब्रह्मः, महाब्रह्मा ।

***द्विस्तावात्रिस्तावागोष्ठश्वाः** ॥ १३४ ॥ एते वा निपात्यंते । द्विस्तावती । त्रिस्तावती । द्विस्तावाः वेदिः । त्रिस्तावाः वेदिः। अत्त्ये तीशब्दस्य खं । गोष्ठे श्वा गोष्ठश्वः । अत्सांतः ।

***प्रत्यनुसमोऽक्ष्णो हे** ॥ १३५॥ प्रत्यादेः परादक्षिशब्दाद् हसे टो भवति । अक्षिणी प्रति प्रत्यक्षं।अनुगतमक्ष्णः-अन्वक्षं।समीपमक्ष्णः-समक्षं

**शरदादेः** ॥ १३६ ॥ अस्माट्टो भवति हे। शरदः समीपमुपशरदं । प्रतिशरदं । उपमनसं । अनुदिशं ।

***जराया ङश्च** ॥१३७॥ जराशब्दांतात् टो भवति ङश्चादेशः । जरायाः समीपमुपजरसं । प्रतिजरसं ।

**अनः** ॥ १३८ ॥ अन्नंताट्टो भवति हे । आत्मन्यधि-अध्यात्मं । उपराजं । प्रत्यात्मं ।

**नपो वा** ॥ १३९ ॥ अन्नंताद् नपो हे टो वा स्यात् । चर्मणः समीपमुपचर्मं । उपचर्म। प्रतिचर्मं । प्रतिचर्म ।

***नद्यगिरिपौर्णमास्याग्रहायण्या** ॥१४०॥

झयावंताद् टो वा स्यात् हे । उपककुभं । उपककुप् । प्रतिसमिधं । प्रतिसमित् । गिरेर्बहिः बहिर्गिरं । बहिर्गिरि । उपपौर्णमासं । उपपौर्णमासि । उपाग्रहायणं । उपाग्रहायणि ।

*नद्याः ॥ १४१ ॥ नदीशब्दांताट्टो वा स्यात् । उपनदं । उपनदि ।

*स्येः ॥ १४२ ॥ स्यिपूर्वाया: नद्याः टो भवति हे।पंच नद्यःसमाहृताःपंचनदं।सप्तनदं।

* गोदावर्याः ॥१४३॥ स्यिपूर्वाद् गोदावरीशब्दात् टो वा स्यात्। द्विगोदावरं।सप्तगोदावरं।

*सरजसोपशुनानुगवं ॥ १४४ ॥ एते टांताः निपात्यंते हसे । सह रजसा सरजसमभ्यवहरति । शुनोंतिकमुपशुनमास्ते। टे वस्योत्वं। गवामन्वायतं-अनुगवं यानं ।

स्वांगाद्बेऽक्षिसक्थ्नः ॥ १४५॥ स्वांगवाचकाद् अक्ष्णःसक्थ्नश्च बसे टो भवति। विशाले अक्षिणी अस्य–विशालाक्षः । कल्याणाक्षः । गौरे सक्थिनी अस्य-गौरसक्थः।स्वक्षी।अतिसक्थी। स्वांगादिति किं ? स्थूलाक्षिरिक्षुः । ब इति किं वामाक्षि ।

द्रुण्यंगुलेः ॥ १४६ ॥ द्रुणि दारुविषये अंगुलेर्बसे टो भवति । द्वे अंगुली अस्य–द्व्यंगुलं । त्र्यंगुलं । चतुरंगुलं दारु ।

*द्वित्रेर्मूर्ध्नो वा ॥१४७॥ द्वित्रिभ्यां मूर्ध्नः टो वा स्याद् बसे । द्विमूर्धः।द्विमूर्द्धा । त्रिमूर्द्धः । त्रिमूर्द्धा ।

*प्रधानङट्स्त्रीप्रमाण्योरः ॥१४८॥ प्रधानभूता या ङडंता स्त्रीप्रमाणीशब्दश्च तदंताद् बाद् अत्यो वा स्यात्।कल्याणी पंचमी आसां कल्याणीपंचमा रात्रयः । कल्याणीषष्ठा भार्याः । स्त्री प्रमाणी येषां ते स्त्रीप्रमाणाः कुटुंबिनः । प्रधानग्रहणं किं ? कल्याणी पंचमी यस्मिन् कल्याणीपंचमीकः पक्षः ।

×भान्नेतुः ॥१४९॥ भवाचिनः परात् नेतृशब्दादत्त्वं स्यात् । मृगो नेता आसां-मृगनेत्रा रात्रयः।पुष्यनेत्राः।भादिति किं? दृप्तनेतृकं सैन्यं ।

*लोम्नोंऽतर्बहिर्भ्यां ॥ १५०॥आभ्यां परात् लोम्नः अत्त्वं स्यात् बसे । अंतर्गतानि लोमान्यस्य अंतर्लोमः । बहिर्लोमः ।

नञ्बहोर्ऋचो माणवचरणे ॥ १५१ ॥ नञ्बहुभ्यां परात् ऋक्छब्दात् अत्यो भवति यथासंख्यं माणवे चरणे च वाच्ये । न विद्यंते ऋचोऽस्य अनृचः माणवकः। बह्वृचो ब्राह्मणः। माणवचरण इति किं?अनृकं साम।बह्वृकं सूक्तं।

*नाभेः स्वौ ॥१५२॥ नाभ्यंताद् बसादत्यो भवति स्वौ । हिरण्यं नाभौ यस्य -हिरण्यनाभः। पद्मनाभः । ऊर्णनाभः ।

*नञ्व्युपत्रेश्चतुरः ॥ १५३ ॥ एभ्यःपरात् चतुःशब्दात् अत्वं स्यात् बसे।अदृश्यानि चत्वारि येनासौ अचतुरः । विगतानि चत्वारि यस्य विचतुरः । समीपे चतुर्णां--उपचतुरं । त्रयो वा चत्वारो वा -त्रिचतुराः ।

सोः ॥ १५४ ॥ सुपूर्वाच्चतुरोऽत्त्वं स्यात् । शोभनानि चत्वारि यस्यासौ सुचतुरः ।

प्रातर्दिवाश्वसः ॥ १५५॥ सुपूर्वाद् प्रातरादेरत्त्वं स्यात्।शोभनं प्रातरस्य सुप्रातः।सुदिवः।सुश्वः।

प्रोष्ठैण्यजात्पदः ॥१५६॥ प्रोष्ठादेःपरः पदो निपात्यते । प्रोष्ठस्येव पादावस्य--प्रोष्ठपदः।एणीपदः । अजपदः । अत्ये पदभावः ।

चतुःशारेरश्रिकुक्षेः ॥१५७॥चतुःशारिपूर्वाभ्यां आश्रिकुक्षिभ्यामत्त्वं स्यात् । चतस्रोऽश्रयोऽस्य चतुरश्रः । शारिरिव कुक्षिरस्य शारिकुक्षः ।

नञ्दुःसोःसक्थिहलेर्वा ॥ १५८ ॥ नञादिपूर्वाभ्यां सक्थिहलिभ्यां अत्यो वा स्यात् ।

न विद्यते सक्थ्यस्य-असक्थः।असक्थिः। दुःसक्थः। दुःसक्थि। सुसक्थः। सुसक्थिः। अहलः। अहलिः। दुर्हलः। दुर्हलिः। सुहलः सुहलिः।

*अस् प्रजायाः ॥१५९॥ नञादिपूर्वाद् प्रजाशब्दादस् स्यात्। न विद्यते प्रजा अस्य अप्रजाः। अप्रजसौ। अप्रजसः। दुःप्रजाः। सुप्रजाः।

* मंदाल्पाच्च मेधायाः ॥१६०॥ आभ्यां परात् नञादिपूर्वाच्च मेधाशब्दात् अस् स्यात् बसे। मंदमेधाः। अल्पमेधाः। अमेधाः।दुर्मेधाः।सुमेधाः।

धर्मात् केवलादन् ॥ १६१॥ केवलो धर्मशब्द एव यत्रोत्तरपदं तदंताद् बसात् अन् स्यात्। साधूनामिव धर्मोऽस्य साधुधर्मा। क्षत्रियधर्मा। अनंतधर्मा। केवलादिति किं ? परमः स्वो धर्मोऽस्य परमस्वधर्मः।

सुहरिततृणसोमाज्जंभात् ॥ १६२ ॥ स्वादिपूर्वाद् जंभादन् स्यात्। शोभनो जंभो यस्य सुजंभा। हरितजंभा। तृणजंभा। सोमजंभा। स्वादेरिति किं ? चारुजंभः।

दक्षिणेर्मा लुब्धयोगे ॥ १६३ ॥ दक्षिणेर्मेति अन्नंतो निपात्यते लुब्धेन योगे।दक्षिणं अंगं ईर्मं बहुव्रणं वाऽस्य व्याधेन दक्षिणेर्मा मृगः। लुब्धयोग इति किं ? दक्षिणेर्मः पशुः।

*संप्राज्जानोर्ज्ञुज्ञौ ॥१६४॥ संप्राभ्यां परस्य जानुशब्दस्य ज्ञुज्ञावादेशौ स्तः। संगते जानुनी अस्य-संज्ञुः। संज्ञः।प्रगते प्रकृष्टे वा जानुनी अस्य--प्रज्ञुः। प्रज्ञः।

वोर्ध्वात् ॥ १६५ ॥ ऊर्ध्वात्परस्य जानुनस्तौ वा स्तः। ऊर्ध्वे जानुनी अस्य--ऊर्ध्वज्ञुः। ऊर्ध्वज्ञः। ऊर्ध्वजानुः।

जायाया निङ् ॥ १६६ ॥ जायाशब्दस्य निङ् भवति। युवतिर्जाया अस्य--युवजानिः।

*भृतित्यान्मासाट्ठः ॥१६७॥ भृतावर्थे विहितात् त्यात् परान्मासात् ठो भवति। पंच भृतिरस्य पंचकः।पंचको मासोऽस्य पंचकमासिकः। विंशकमासिकः। भृतित्यादिति किं ? सुमासः।

*सुपूत्युत्सुरभेर्गुणे गंधस्येः ॥१६८॥स्वादिभ्यःपरस्य गुणवाचिनःगंधस्य बसे इकारादेशो भवति। शोभनो गंधोऽस्य सुगंधिः। पूतिगंधिः। उद्गंधिः। सुरभिगंधिः। स्वादेरिति किं ? तीव्रगंधो हिंगुः। गुण इति किं ? शोभनगंधास्तगरादयोऽस्य सुगंधः आपणिकः।

*वाऽल्पे ॥१६९ ॥ अल्पार्थे वर्तमानस्य तस्येर्वा स्यात्।घृतस्य गंधोऽल्पमस्मिन् घृतगंधिः। घृतगंधः ओदनः। सूपगंधिः। सूपगंधः।

*वोपमानात् ॥१७०॥उपमानादुत्तरस्य गंधस्येर्वा स्यात्। पद्मस्येव गंधोऽस्य पद्मगंधिः। पद्मगंधः। उत्पलगंधिः। उत्पलगंधः। करीषगंधिः। करीषगंधः। पुनर्वाग्रहणमुत्तरत्र निवृत्यर्थं।

खं पादस्याहस्त्यादेः ॥ १७१ ॥ हस्त्यादिवर्जितादुपमानादुत्तरस्य पादस्य खं भवति। व्याघ्रस्येव पादावस्य व्याघ्रपात्। सिंहपात्। पादस्येति किं ? व्याघ्रमुखः। अहस्त्यादेरिति किं ? हस्तिपादः। अश्वपादः। महिषपादः। दासीपादः।

सुस्यादेः ॥ १७२ ॥ स्वादेः स्यादेश्च तस्य खं स्यात् बसे। शोभनौ पादावस्य सुपात् द्विपात्। त्रिपाद्। चतुःपात्।

कुंभपद्यादिः ॥ १७३ ॥ एते निपात्यंते। कुंभ इव पादावस्य कुंभपदी। एकपदी। शूकरपदी। गोधापदी। सूचीपदी।

वयसि दंतस्य दतृ ॥ १७४ ॥ वयसि गम्यमाने स्वादेः स्यादेश्च परस्य दंतस्य दतृ इत्ययमादेशः स्यात्। सुजाता दंता अस्य सुदन्। द्विदन्। त्रिदन्। चतुर्दन्। पंचदन्। षोडन्।

चतुर्दती गौः । वयसीति किं ? चतुर्दंतो हस्ती ।

**स्त्रियां खौ ॥ १७५ ॥** स्त्रियां दंतस्य दतृ स्यात् खौ । अय इव दंता अस्याः-अयोदती । फालदती । स्त्रियामिति किं ? वज्रदंतः । खाविति किं ? समदंती ।

**वा श्यावारोकात् ॥ १७६ ॥** आभ्यां परस्य दंतस्य दतृ वा स्यात् खौ । श्यावा ध्यामलिताकाराः दंता अस्य-श्यावदन् । श्यावदंतः । अरोकाः निर्दीप्तयो निश्छिद्रा वा दंता अस्य-अरोकदन् । अरोकदंतः ।

**शुद्धाग्रांतशुभ्रवृषवराहाहिमूषिकात् १७७** एभ्यः परस्य दंतस्य दत्रादेशो भवति वा बसे । शुद्धा दंता अस्य शुद्धदन् । शुद्धदंतः । कुड्मलाग्रमिव दंता अस्य–कुड्मलाग्रदन् । कुड्मलाग्रदंतः । शिखराग्रदन्, शिखराग्रदंतः। शुभ्रदन्, शुभ्रदंतः । वृषदन् वृषदंतः, । वराहदन्, वराहदंतः । अहिदन्, अहिदंतः । मूषिकदन् मूषिकदंतः ।

**ककुदस्यावस्थायां खं ॥ १७८ ॥** ककुदस्य खं भवत्यवस्थायां । असंजात ककुदमस्य असंजातककुत् । पूर्वककुत् । अवस्थायामिति किं ? श्वेतककुदः ।

**त्रिककुदद्रौ ॥ १७९ ॥** त्रिककुदिति निपात्यते अद्रावभिधेये । त्रीणि ककुदान्यस्य त्रिककुद् गिरिः । त्रिककुदोऽन्यः ।

**व्युदः काकुदस्य ॥ १८० ॥** आभ्यां परस्य काकुदस्य खं स्यात् । विशिष्टं काकुदं तात्वस्य-विकाकुत् । उत्काकुत् ।

**पूर्णाद् वा ॥१८१ ॥** पूर्णाद् परस्य खं वा स्याद् । पूर्णं काकुदमस्य-पूर्णकाकुत् । पूर्णकाकुदः ।

*+खरखुराभ्यां नासिकायाः खौ ॥१८२॥* खरखुराभ्यां परस्य नासिकाशब्दस्य नस् भवति खौ । खरस्येव नासिकास्य–खरणाः । खुरणाः । खाविति किं ? खरनासिकः ।

***नसोऽस्थूलाच्च ॥ १८३ ॥** स्थूलवर्जितान्मृदः ताभ्यां च परस्य नासिकायाः नसो भवति खौ । द्रु इव नासिकास्य–द्रुणसः। वार्ध्रीणसः । गोनसः । खरणसः । खुरणसः । अस्थूलादिति किं ? स्थूलनासिका ।

**गेः ॥ १८४ ॥** गेः परस्याः तस्याः नसो भवति । उन्नता नासिकास्य-उन्नसं । प्रणसं मुखं ।

**+वेः खुख्रग्राः ॥ १८५ ॥** विपूर्वायाः तस्याः खुखग्राः आदेशाः भवति । विगता नासिकास्य-विखुः । विखः । विग्रः ।

**सुहृद्दुर्हृन्मित्रामित्रे ॥ १८६ ॥** एतौ निपात्येते मित्रामित्रे चाभिधेये । शोभनं हृदयमस्य–सुहृत् मित्रं । पापं हृदयमस्य दुर्हृदमित्रं । हृदयस्य हृद् । मित्रामित्र इति किं ? सुहृदयः साधुः । दुर्हृदयः खलः ।

***धनुःखौ ॥ १८७ ॥** धनुः शब्दः खावेव प्रयोक्तव्यो बसे । शतं धनूंष्यस्य शतधनुः । दृढधनुः । पुष्पधनुः । खाविति किं ? गांडीवधन्वा । सारंगधन्वा ।

***स्त्रियामूधसोऽनङ् ॥ १८८ ॥** स्त्रियां वर्तमानस्योधसोऽनङ् स्यात् । कुंडमिवोधोऽस्याः कुंडोध्नी । घटोध्नी गौः । पीवरोध्नी । स्त्रियामिति किं ? महोधाः पर्जन्यः ।

***इनः कप् ॥ १८९ ॥** इन्नंतात् कप् भवति स्त्रियां । बहवो दंडिनोऽस्यां बहुदंडिका । बहुछत्रिका । बहुवाग्मिका शाला ।

***उरःप्रभृतेः ॥ १९० ॥** उरः प्रभृतिभ्यः कप् स्यात् । व्यूढमुरोऽस्य–व्यूढोरस्कः । महोरस्कः । चित्रोपानत्कः । प्रभूतसर्पिष्कः । सलक्ष्मीको जिनः ।

×नञोऽर्थात् ॥ १९१ ॥ नञ्पूर्वादर्थात् कप् स्यात् । नास्त्यर्थो यस्यानर्थकं । नञ इति किं ? व्यर्थं ।

+पुंस्पयोनड्वन्नौलक्ष्म्य एकार्थे ॥ १९२ ॥ एभ्य एकार्थे एकत्वे कप् स्यात् । प्रियः पुमानस्याः—प्रियपुंस्का । प्रियपयस्करः । प्रियानुडुत्कः । प्रियनौकः । प्रियलक्ष्मीकः । एकार्थ इति किं ? द्विपुंस्कः । द्विपुमान् । बहुलक्ष्मीकः । बहुलक्ष्मीः ।

ऋन्मोः ॥ १९३ ॥ ऋकारांतान्मुसंज्ञाच्च कप् स्यात् । बहुभर्तृका स्त्री । बहुमातृकः । बहुकुमारीकः । बहुवामोरूकः ।

शेषाद्वा ॥ १९४ ॥ यस्य सांतो विधिर्न विहितस्तस्माद् शेषात् कब्वा स्यात् । बहुखट्वाकः । बहुखट्वकः । बहुखट्वः । बहुमालाकः, बहुमालकः, बहुमालः । शेषादिति किं ? वृकपात् ।

*नेयसः ॥ १९५ ॥ ईयसंतात् कप् न भवति । बहुश्रेयान् । विद्यमानश्रेयसी । बहुप्रेयसी पुरुषः ।

खौ ॥ १९६ ॥ खौ विषये कप् न भवति । बहुदेवदत्तः । विश्वदेवो ग्रामः ।

+सहादेस्तुल्ये ॥ १९७ ॥ तुल्ये यो वर्तते सहशब्दः तदादेः कप् न स्यात् । सपुत्रः आगतः । सपुत्रः स्थूलः । सहादेरिति किं ? श्वेताश्वकोऽयमागतः । तुल्य इति किं ? सह विद्यमानानि लोमान्यस्य लोमकः ।

स्तुतौ भ्रातुः ॥ १९८ ॥ स्तुत्यर्थे भ्रातुः कप् न स्यात् । सुभ्राता । दर्शनीयभ्राता । कल्याणभ्राता । स्तुताविति किं ? दुर्भ्रातृकः ।

नाडीतंत्र्योः स्वांगे ॥ १९९ ॥ आभ्यां स्वांगे कप् न स्यात् । बहुनाडी जंघा । बहुतंत्री ग्रीवा । स्वांगे इति किं ? बहुनाडीकः स्तंबः । बहुतंत्रीका वीणा ।

निष्प्रवाणिः ॥ २०० ॥ निष्प्रवाणिरित्यकबंतं निपात्यते । निर्गता प्रवाणी तंतुवायशलाका अस्मान्निःप्रवाणिः पटः कंबलो वा ।

ज इच् ॥ २०१ ॥ जार्थे इच् स्यात् । केशाकेशि । कचाकचि । मुशलामुशलि ।

द्विदंड्यादिः ॥ २०२ ॥ द्विदंड्यादय इजंताः साधवो भवंति । द्वौ दंडौ अस्मिन् प्रहरणे द्विदंडि । उभादंडि । त्रिदंडि । उभादंति घ्नंति । उभांजलि पिबति । उभयाबाहु प्रहरति ।

इति श्रीशब्दार्णवापरनाम्नि जैनेंद्रमहाव्याकरणे शब्दार्णवचंद्रिकायां लघुवृत्तौ चतुर्थाध्याये द्वितीयपादः ।

## तृतीयः पादः ।

आदेरेकाचो द्वे ॥ १ ॥ आदेरेकाचः द्वे रूपे भवतः इत्याधिकृतं वेदितव्यं । वक्ष्यति—लिड्ङ्चकचि धोः" इति । तेन-धोरादेरेकाचः द्वे रूपे भवतः । पपाच । जुहोति । अपीपचत् । आदेरिति किं ? जजागार । अनाद्यस्य ऋकारस्य माभूत् ।

+सुपः ॥ २ ॥ सुब्धोर्यस्य कस्यचिदेकाचो द्वे स्तः । इत्यधिकृतं ज्ञेयं । वक्ष्यति—सन्यङोः । पुपुत्रीयिषति । पुतित्रीयिषति । पुत्रीयियिषति ।

अचः ॥ ३ ॥ धोः सुब्धोश्चादेरचः परस्यैकाचो द्वे भवतः । अटाट्यते । आशिश्वीयिषति, अश्वीयियिषति । अश्वीयिषिषति ।

न स्फादौ न्द्रोऽयि ॥ ४ ॥ स्फादौ वर्तमाना आदेरचः परे नकारदकाररेफबकारा न द्विरुच्यंते अयकारे परतः । इन्दिदिषति । अड्डिडिषति । अर्चिचिषति । उब्जिजिषति । स्फादाविति किं ? अरिरिषति । न्द्र इति किं ? ईचिक्षिषते । अयीति किं ; अरार्यते । अचः

इति किं ? विद्रासति ।

+चस्यैके ॥ ५॥ चसंज्ञकस्य द्वे न स्त इत्येके । लोलूयिषते । अस्त्येवेत्यपरे । लुलोलूयिषते ।

+यकस्तृतीयस्य ॥६॥ यगंतस्य धोस्तृतीयस्यैकाचो द्वे स्तः।कंडूयियिषति।श्वोसूयियिषति ।

×ईर्ष्यः ॥ ७ ॥ ईर्ष्यतेस्तृतीयस्यैकाचो द्वे स्तः । ईर्ष्यियिषति । ऐर्ष्यियत् ।

+सनो वा ॥ ८ ॥ ईर्ष्यतेः सनंतस्य तृतीयस्यैकाचो द्वे वा स्तः । ईर्ष्यिषिषति । ईर्ष्यियिषति।

थः ॥९॥ ते द्वे समुदिते थसंज्ञे स्तः । ददति । दधति । अददुः । थप्रदेशाः थवित्सेरित्यादयः ।

जक्षादिः ॥ १० ॥ जक्षित्यादयः थसंज्ञका भवंति । जक्षति । जाग्रति । दरिद्रति । चकासति । शासति ।

पूर्वश्चः ॥ ११ ॥ द्विरुक्तयोः पूर्वोऽवयवः चसंज्ञो भवति । पपाठ । पापठ्यते । अपीपठत् । चप्रदेशाः चस्योवादयः ।

लिड्डुच्कचि धोः ॥ १२ ॥ लिटि उचि कचि च परतः धोः सुब्धोश्चादेरचः परस्य चैकाचो द्वे स्तः । पपाच । प्रोर्णुनाव । बिभेति । आटिटत्, आशिश्वीयत् । लिड्डुच्कचीति किं ? मादात् । धोरिति किं ? ईहांचक्रे ।

सन्यङोः ॥ १३॥ सनंतस्य यङंतस्य च द्वे रूपे भवतः । अटिटिषति । अटाट्यते । चिकीर्षति । चेक्रीयते ।

+चिक्लिदचक्नसदाश्वत्साह्वन्मीढ्वत्॥१४॥ एते निपात्यंते । चिक्लिदः । चक्नसः । कस्ये द्वित्वं । दाश्वन् । श्वसौ इट् द्वित्वाभावश्च । साह्वान् । सहेर्मोविधिरुक्तो दीत्वमद्वित्वमनिट्त्वं च। मीढ्वान् । मिहेरद्वित्वमनिट्त्वमुक्तो दीर्घं ढत्वं च।

+चराचरचलाचलपतापतवदावदस्य ॥ १५॥ चरादिना-मचे द्वित्वं वा स्यात् चस्य चाक् । वदावदः । वदः।चराचरः।चरः।चलाचलः।चलः।पतापतः।पतः।

+घनाघनपाटूपटौ ॥१६॥एतौ वा निपात्यौ । घनाघनः । हंतेरचि घत्वं द्वित्वं च । चस्य चाभागमः । घनः । पाटूपटः । पाटेरचि णेरुप् द्वित्वं चस्याकोऽपवादः ऊगागमो दीत्वं च ।

*लिटीज्यणः साचोऽर्य्याऽऽज्यं॥१७॥ आज्या इत्येतस्मात् पूर्वस्य धोर्लिटि चस्य साचो यणः इग् भवति अरेफयकारपरस्य । सुष्वाप । सुष्वपिथ । उवाच । उवचिथ । इयाज । इयजिथ । उवाय । उवयिथ । उवास । उवसिथ । विव्याध । विव्यधिथ । विव्याच । विव्याचिथ । जिज्यौ । जिज्यिथ । आर्य्य इति किं?विव्याध । आज्यमिति किं?सस्याम ।

*न वो यः॥१८॥ वेञो वकारस्य लिटि इग् न भवति । ऊयतुः । ऊयुः ।

*वा ॥१९॥ वेञो वकारस्य लिटि वा नेग् भवति । ऊयतुः । ऊयुः । ऊवतुः । ऊवुः ।

प्ये च॥२०॥ वेञः प्ये लिटि चेग् न भवति । प्रवाय । ववतुः । ववुः । ववथ ।

ज्यः ॥२१॥ ज्या इत्येतस्य धोः प्ये इग् न भवति । प्रज्याय । उपज्याय ।

व्यः ॥२२॥ व्येञः प्ये नेग् भवति । संव्याय । उपव्याय ।

परेर्वा ॥२३॥ परेः परस्य व्येञः प्ये नेग् वा स्यात् । परिव्याय । परिवीय ।

*स्वब्वच्छ्व्यादेः किति ॥२४॥ स्वप्वचोः श्व्यादीनां च किति साचो यणः इक् स्यात् । सुप्तः । सुप्तवान् । सुप्त्वा । सुप्तिः । उक्तः । उक्तवान् । उक्त्वा । उक्तिः । शूनः । शूनवान् । उषितः । उषितवान् । उदितः । उदितवान् । उदित्वा । उदितिः । इष्टः । इष्टवान् । इष्ट्वा । इष्टिः । उप्तः । उप्तवान् । उप्त्वा । उप्तिः । ऊढः । ऊढवान् । ऊढ्वा ।

ऊदि० । उत: । उतवान् । उत्त्वा । उति: ।संवीत: । संवीतवान् । संवित्वा । संवीति: । हूत: । हूतवान् । हूत्वा । हूति: । कितीति किं ? स्वस: ।

* वशिव्यधिव्यचिज्याग्रहिव्रश्चिप्रच्छिभ्रस्जां क्ङिति ॥ २५ ॥ वश्यादीनां किति ङिति चेग् भवति । उशित: । उशितवान् । उष्ट: । उशंति । विद्ध: । विद्धवान् । विध्यति । विचित: । विचितवान् । विचति । जिनाति । जीन: । जीनवान् । जीयते । गृहीत: । गृहीतवान् । गृह्णाति । वृश्चति । वृक्ण: । वृक्णवान् । पृष्ट: । पृष्टवान् । पृच्छति । भृष्ट: । भृष्टवान् । भृज्जति । कितीति किं ? विव्येचि । अयीति किं ? वृश्च्यते ।

काचि स्वापे: ॥ २६ ॥ स्वापे: कचीग्भवति असूषुपत् । असूषुपतां । असूषुपन् । कचीति किं ? स्वाप्यते ।

*न श्वे: ॥ २७ ॥ श्वयते: कचीग् न भवति । आशिश्वियत् । आशिश्वियतां । अशिश्वियन् ।

*वशो याङि ॥ २८ ॥ वशेर्यङीक् न भवति । वावश्यते । वावश्येते । वावश्यंते । यङीति किं ? उशंति ।

*स्वप्स्यम्व्य: ॥ २९ ॥ एषां यङीग् भवति । सोषुप्यते । सेसिम्यते । वेवीयते ।

चाय: की ॥ ३० ॥ चायते: याङि परत: कीत्ययमादेशो भवति । चेकीयते, चेकीयेते । चेकीत: । चेकीथ: ।

*ह्वस्थे ॥ ३१ ॥ थसंज्ञानिमित्ते त्ये ह्वयतेरिग् भवति । जुहुषति । जोहूयते । जुहाव ।

*णौ सन्कचो: ॥ ३२ ॥ सन्यङो: कच्परे च णौ ह्वयतेरिग् भवति । जुहावयिषति । अजूहवत् । अजूहवतं । अजूहवन् ।

न श्वा श्वे: ॥ ३३ ॥ श्वयते: सन्कच्परे णौ न वेग् भवति । शुश्रावयिषति । शिश्वाययिषति ।

षति । अशूशवत् । आशिश्वियत् ।

लिड्यङो: ॥ ३४ ॥ श्वयतेर्लिटि यङि च न वेग् भवति । शुशाव । शुशुवतु: । शुशुवु: । शिश्वाय।शिश्वियतु:।शिश्वियु:।शोशूयते। शेश्वीयते ।

प्याय: ॥ ३५ ॥ प्यायीङो लिड्यङोरिग् भवति । आपिप्ये । आपिप्याते । आपेपीयते । आपेपीयेते ।

*तेऽगे: ॥ ३६ ॥ गिहीनस्य प्याय: इग् भवति तसंज्ञके परत: । पीनं मुखं । पीनावंसौ । पीनौ स्तनौ । पनिवंतौ स्तनौ । त इति किं ? प्यायते । अगेरिति किं ? मप्यानमूध: ।

*आङोऽधौ ॥ ३७ ॥ आङ: परस्य प्याय: इग् भवति अंधावर्थे । आपीनोऽधु: । आपीनमूध: । आपीनवानंधू: । आपीनवदूध: । आङ इति किं ? मप्यानमूध: । अंधाविति किं ? आप्यानश्चंद्रमा: ।

*स्फाय: ॥ ३८ ॥ स्फायतेरिग् भवति ते परत: । स्फीत: । स्फीतवान् ।

*प्रमाच स्त्य: ॥३९॥ प्रपूर्वस्य स्त्यायतेरिग् भवति ते परत: । प्रस्तीत: । प्रस्तीतवान् । प्रस्तीम: । प्रस्तीमवान् । प्रमाच इति किं ? संस्त्यान: । संस्त्यानवान् ।

*द्रवमूर्तिस्पर्शे श्य: ॥ ४० ॥ द्रवमूर्तौ स्पर्शे च श्यङ: इग् भवति ते परत: । शीनं घृतं । शीतं तोयं । द्रवमूर्तिस्पर्शे इति किं ? संश्यानो वृश्चिक: । शीतेन गत: संकुचितो वा ।

प्रते: ॥ ४१ ॥ प्रतिपूर्वस्य श्यायतेस्ते इग् भवति । प्रतिशीन: । प्रतिशीनवान् ।

*वाभ्यवप्राच: ॥ ४२ ॥ अभिअवपूर्वस्य श्यायतेस्ते इग् वा भवति । अभिशीन: । अभिश्यान: । अभिशीनवान् । अभिश्यानवान् । अवशीन: । अवशीनवान् । अवश्यान: । अवश्या-

नवान् । अभ्यवक्षीनः । अभ्यवश्यानः।

*हविःक्षीरे शृतं पाके ॥ ४३ ॥ श्राश्राप्योः के शृभावो निपात्यते हविःक्षीरयोः पकार्थे । शृतं हविः । शृतं क्षीरं । हविःक्षीर इति किं ? श्राणा यवागूः । श्रपिता यवागूः ।

एचोऽश्याः ॥ ४४ ॥ एजंतस्य धोरात्वं भवति अशिति परतः । वाता । वातुं । वातव्यं । अवदाता । अवदातुं । अवदातव्यं । ग्लाता । ग्लातुं । ग्लातव्यं । अशीति किं ? वयति । अवघति । ग्लायति ।

*व्योऽलिटि ॥ ४५ ॥ व्येञः आ भवत्यलिटि परतः । संव्याता । संव्यातुं । संव्यातव्यं । उपसंव्यानं।अलिटि इति किं ? विव्याय।विव्ययिथ।

स्फुरिस्फुल्योर्घञि ॥ ४६ ॥ अनयोर्घञि आ भवत्येचः । विष्फारः । विस्फारः । विष्फालः । विस्फालः ।

*वाम्यपगुरः ॥ ४७ ॥ अपगुरीङः एचः आ वा स्यात् अमिपरे । अपगारमपगारं । अपगोरमपगोरं ।

*दीङः सनि ॥ ४८ ॥ दीङः आ वा स्यात् सनि परतः । दिदासते । दिदीषते ।

प्ये च ॥ ४९ ॥ दीङो नित्यमा भवति प्ये चैजिवषये च । उपदाय । उपदाता।उपदातव्यं । प्ये चेति किं ? अवदीयते ।

*मिञ्मीञोरखाचि ॥ ५० ॥ अनयोरा भवति खल्यमचं च मुक्त्वा प्ये एचविषये च । निमाय । निमाता । निमातुं । निमातव्यं । प्रमाय। प्रमाता । प्रमातुं । प्रमातव्यं । अखाचीति किं ? ईषन्निमयः । दुष्प्रमयः । निमयः । आमयः ।

*वा लीङ्लिनात्योः ॥५१॥ अनयोरा वा स्यात् प्ये चाविलाय, विलीय । विलाता। विलेता । विलातुं,विलेतुं । विलातव्यं । विलेतव्यं । अखाचीति किं ? ईषद्विलयः । विलयः

*अर्चादौ णौ ॥५२॥ अर्चादिष्वर्थेषु लीङ्लिनात्योः णौ नित्यमा भवति । जटाभिरालापयते । श्येनो वर्तिकामपलापयते । लोकमुल्लापयते ।

क्रीङ्जेः ॥ ५३ ॥ एषामेचो णौ आत्वं स्यात् । क्रापयति । अध्यापयति । आपयति ।

सिध्यतेरज्ञाने ॥ ५४ ॥ सिध्यतेरा भवत्यज्ञानेऽर्थे णौ परतः । अन्नं साधयति । अर्थं साधयति । अज्ञान इति किं ? आचारः कुलं सेधयति । क्षमा धर्मं सेधयति ।

चिस्फुरोर्वा ॥५५॥चिञस्फुरश्च णौ आ वा स्यात् । चापयति, चाययति धर्मं । स्फारयति स्फोरयति धनुः ।

प्रजने वेतेः ॥ ५६ ॥ प्रजनेऽर्थे वेतेर्णौ आ वा स्यात् । पुरो वातो गाः प्रवापयति । प्रवाययति । लवणं गाः प्रवापयति । लवणं गाः प्रवाययति ।

*बिभेतेर्दे ॥ ५७ ॥ बिभेतेर्णौ आ वा भवति दविषये । मुंडो भापयते । जटिलो भापयते । मुंडो भीषयते । द इति किं ? कुंचिकयैनं भाययति ।

ईतः पुग् नित्यं ॥ ५८ ॥ ईकारांतस्य बिभेतेर्दे णौ नित्यं पुगागमो भवति । जटिलो भीषयते ।

स्मिङः ॥ ५९ । दे णौ परतः स्मिङः आत्वं स्यात् । मुंडो विस्मापयते । जटिलो विस्मापयते ।

झल्यकिति सृजदृशोऽम् ॥ ६० ॥ झलादावकिति परतः सृजिदृशोरमागमो भवति । स्रष्टा । स्रष्टुं । स्रष्टव्यं । स्रक्ष्यति । द्रष्टा । द्रष्टुं । द्रष्टव्यं । द्रक्ष्यति । झलीति किं ? सर्जनं

दर्शनं । अकितीति किं ? सृष्टः । दृष्टः ।

*स्पृशादिसृपो वा ॥६१॥ स्पृशादीनां सृपेश्च झल्यकिति अम् वा भवति । स्प्रष्टा । स्पर्ष्टा । म्रष्टा । मर्ष्टा । क्रष्टा । कर्ष्टा । त्रप्ता । तर्प्ता । द्रप्ता । दर्प्ता । सप्ता । सर्प्ता ।

*ष्वादेः ष्णोऽष्ठ्य।ष्ठिव्ष्वष्कः स्नं ॥६२॥ धोरायोः षकारणकारयोः सकारनकारादेशौ स्तः ष्ठ्यादीन् वर्जयित्वा । सहते । नयति । नश्यति । ष्वादेरिति किं ? षोडन् । लषति । भणति । अष्ठ्यादेरिति किं ? ष्ठ्यायति । निष्ठीवति । ष्वष्कते ।

*व्योः खं वल्कौ ॥ ६३ ॥ वकारयकारयोः खं भवति वलि कौ च परतः । देदिवः । देदिमः । सेसिवः । सेसिमः । ऊयी–ऊतः । क्नूयी–क्नूतं । क्ष्मायी-क्ष्मातं।कंडूः।बोभूः।वल्कौ इति किं ? सेव्यते

हल्ङ्याब्भ्यः सुसिप्त्यनच् ॥ ६४ ॥ हलंतात् ङी चाप् च यो दीस्तदंताच्च सुसिप्तिपामनचां खं भवति । तक्षा । उखास्रत् । कुमारी । गौरी । मतिमा । बहुराजा । अभिनस्त्वं । अछिनस्त्वं । अबिभर्भवान् । अजागर्भवान् । हल्ङ्याब्भ्य इति किं ? जिनः। लक्ष्मीः । क्षीरपाः । निष्कौशांबिः । अतिखट्वः । सुसिप्तीति किं ? अवात्सीत् । अनजिति किं ? भिनाचि ।

केरेङः ॥६५॥ एङात्परस्य केः खं भवति । हे मुने । हे साधोः । एङ इति किं ? हेगौः ।

मात् ॥ ६६ ॥ मादुत्तरस्य केरनचः खं भवति । मोः बुध । हे जिनदत्त ।

पिति कृति तुक् ॥ ६७ ॥ मांतस्य तुगागमो भवति पिति कृति परतः । अग्निचित् । प्रस्तुत्य । पिति कृति इति किं ? चितं गुरुं । मस्येति किं ? प्रकूयं । ग्रामणीः ।

संधौ ॥६८॥ संधावित्यधिकारो वेदितव्यः । संश्लेषः संनिकर्षो वा संधिरिति लोकत एव ज्ञेयं । वक्ष्यति "अचीको यण्„दध्यशान।संधाविति किं ? दधि अशान ।

संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा व्यपेक्षामपेक्षते॥१

छेऽचः ॥ ६९ ॥ अचः छे परतः तुगागमो भवति । गच्छति । इच्छति । पृच्छति ।

आङ्माङोः ॥ ७० ॥ अनयोस्तुग् भवति छे परतः । आच्छादयति । आच्छिनत्ति। माच्छैत्सीत् । माच्छिदत् । ङकारः किं ? आछत्रमानयति आछत्रं । उपमाछत्रं । उपमाछत्रमानयति ।

*घो वा पदस्य ॥ ७१ ॥ पदस्य संबंधिनो घश्छे वा तुक् स्यात्। बदरीच्छाया।कुवलीच्छाया। घ इति किं ? श्वेतच्छत्रं । पदस्येति किं ? ह्रीच्छति म्लेच्छति । अपच्छायते ।

*पस्य ॥ ७२ ॥ पदस्य संबंधिनो दीसंज्ञस्य स्थाने यः पस्तस्य तुग्वा स्यात् छे परतः । हे इंद्रभूते उच्छत्रमानय । हे इंद्रभूते उछत्रमानय ।

अचीको यण् ॥ ७३ ॥ अचि परे इकः यण् भवति ।

त्वं दध्यशान नंदन मध्वपनय रागवर्द्धनं धीर।
पित्रर्थः परिहार्यो राजकुले लाकृतिस्त्याज्या ॥

एचोऽय्वायाव् ॥ ७४ ॥ एचोऽचि परे अयादयो भवंति । नयनं । पवनं । रायौ । नावौ ।

+गव्यूतिरध्वमाने ॥ ७५ ॥ गोरव् निपात्यते अध्वपरिमाणे यूतौ परतः । गव्यूतिः । अध्वमान इति किं ? गोयूतिः ।

व् यि त्ये ॥ ७६ ॥ वकारांतो व आदेशः स यथास्थाने भवत्येचो यकारादौ त्ये परतः । गव्यति । नाव्यति । स्थानिग्रहणं किं ? रेयति । रैयति । विल्य इति किं ? गोभ्यां । त्य इति किं ? गोयानं ।

*धोस्तत्रैव ॥ ७७ ॥ धोर्यकारत्वानिमित्तस्यैचो वकारांतादेशो भवति । हव्यं । लव्यं । अवश्यलाव्यं । अवश्यपाव्यं । धोरिति किं ? मृन्नियमो मा भूत् । बाभ्रव्यो गव्यः । नाव्यं । तत्रैवेति किं ? उपोयते ।

क्षिज्योःशक्तौ॥७८॥शक्त्यर्थे क्षिज्योरेचोऽय् भवति । क्षेतुं शक्यः क्षय्यः । जय्यः शत्रुः । शक्ताविति किं ? क्षेयं । जेयं ।

क्रय्यःस्वार्थे ॥ ७९ ॥ क्रीणातेरेचः स्वाऽर्थेऽय् निपात्यते यत्ये परे । क्रय्या गौः । क्रय्यः कंबलः । क्रेयमन्यत् ।

द्वयोरेकः ॥ ८० ॥ द्वयोः पूर्वपरयोरेको भवतीत्ययमधिकारो ज्ञेयः । वक्ष्यत्यादेप्—देवेंद्रः ।

तद्वत् ॥ ८१ ॥ तयोरिव तद्वत् । तयोः पूर्वपरयोःयत् कार्यं तत्कृतेऽप्येकादेशे यथा स्यात् । वामोरु इति मृत् । ऊरित्यमृन्मृदमृदोरेकादेशः मृद्वद्भवति।तथा च स्वादिविधिः। अन्यथा-वृक्षादावेव स्यात् । देवावित्यत्र सुबौकारः।असुबकारः । तयोरेकादेशः सुब्वद् भवति । तथा च सुबंतं पदमिति साधुः। अन्यथा साधुः पूज्यःइत्यादावेव स्यात् । अधीत्य,प्रेत्येत्यत्र परवद्भावाद् मस्य तुक् ।

आदेप् ॥ ८२ ॥ अवर्णांतादच्येब् भवति । सेयं । गंधोदकं । परमर्द्धिः । तवल्कारः । आदिति किं ? दध्यूर्णं ।

एच्यैप् ॥ ८३ ॥ अवर्णांतादेचि पर ऐब्भवति । सैषा । ममौषधिः । तवैश्यं । वरौषधं ।

*इणेधूठि ॥ ९४ ॥ अवर्णांतादैब्भवति एषु परतः । उपैति । प्रैधते । धौतः । धौतवान् । एचीति किं ? प्रेतः ।

+अक्षादूहिण्यां ॥ ८५ ॥ अक्षादैब्भवत्यूहिण्यां परतः । अक्षौहिणी सेना ।

स्वादीरीरे ॥ ८६ ॥ स्वादैब्भवति ईरीरयोः परतः । स्वैरी । स्वैरिणी । स्वैरः ।

×प्रादूहोढोढ्येषैष्ये ॥ ८७ प्रादैप् भवत्यूहादिषु परतः । प्रौहः । प्रौढः । प्रौढिः । प्रैषः । प्रैष्यः । ऊहादिषु इति किं ? प्रोतः ।

+प्रवत्सार्णकंबलवसनवत्सतराहृणे ॥८८॥ ऋणे परतः ऐप् भवति प्रादिभ्यः । प्रगतं ऋणं प्रार्णं । दशार्णं । ऋणार्णं । कंबलार्णं । वसनार्णं । वत्सतरार्णं ।

+ऋते भासे ॥ ८९ ॥ ऋते परे अवर्णांतादैप् भवति भासे । सुखार्तः । ऋत इति किं सुखेतः । भास इति किं ? परमर्त्तः ।

*अटश्च धौ ॥ ९० ॥ अटश्चैब्भवति अजादौ धौ परतः । ऐक्षिष्ट । ऐक्षत । ऐक्षिष्यत् । औभत् । औभिष्यत् । औभीत् । चकारो नियमार्थः-अट ऐबेव नान्यत् । ओंकारमैच्छत् ओंकारीयत् । औढीयत् ।

ऋत्यैप् गेः ॥ ९१ ॥ अवर्णांताद्गेरैप् भवति ऋकारादौ धौ परतः । प्रार्च्छति । उपार्च्छति । प्रार्ध्नोति । ऋतीति किं ? उपेतः । गेरिति किं ? नर्छति ॥ ।

*वा सुपि ॥ ९२ ॥ गोरवर्णांतादैब् भवति ऋति सुपि धौ परे वा । प्रार्षभीयति । प्रर्षभीयति । उपाल्कारीयति । उपल्कारीयति ।

तथैङि परः ॥ ९३ ॥ गोरवर्णाताद् एङादौ धौ परतः परादेशो भवति । द्वयोरेकः । तथा सुब्धौ तु वा । प्रेषयति । उपेलयति । उपोषति । प्रोषति । उपेलकीयति । उपैलकीयति । उपोदनीयति । उपौदनीयति । एङीति किं ? उपायते ।

+एवेऽनियोगे ॥ ९४ ॥ अवर्णांतादेवे परतः परादेशो भवत्यनियोगे । क्वेव यासि ? इहेव तिष्ठ । अनियोगे इति किं ? अद्यैव तिष्ठ ।

×वोष्ठौतौ से ॥ ९५ ॥ अवर्णांतादोष्ठोत्वोः परतःसे वा परो भवति।बिंबोष्ठी,बिंबौष्ठी। स्थूलोतुः, स्थूलौतुः।से इति किं ? पश्यौष्ठं। अद्यौतुं पश्य।

×सीमंतः केशे ॥ ९६ ॥ सीम्नोऽते परः निपात्यः केशविषये। सीमंतः। केश इति किं ? सीमांतो ग्रामः।

ओमाङोः ॥ ९७ ॥ अवर्णांतात् परो भवत्योमाङोः परतः। का ओमित्यवोचत्। कोमित्यवोचत्। सोमित्यवोचत्। आ–ऊढा। ओढा।अद्य-ओढा-अद्योढा। कदा ओढा-कदोढा। सा ओप्ता–सोप्ता। सा ओढा–सोढा।

*उस्यपदे ॥ ९८ ॥ अवर्णांतादुसि परतः परो भवति अपदे। अभिधुः। अयुः। अदुः। अपद इति किं ? कोषा नेमे।

एप्यतः ॥ ९९ ॥ अकारस्य परो भवत्येप्यपदे परतः। पचे। पठंति। एपीति किं ! अपचे। अत इति किं ? यांति।

*डाजहोऽत इतौ ॥ १००॥ डाजेहस्याच्छब्दस्य परो भवतीतौ परतः। छमत् इति-छमिति। घटिति। डाजह इति किं ? जगदिति आह। अत इति किं ? छपिदिति। इताविति किं ? पटदत्र।

*न म्रेः ॥ १०१ ॥ म्रिसंज्ञकस्यातः इतौ परतः परो नास्ति। पटत्पटदिति। म्रेरिति किं ? पटिति।

*तः ॥ १०२ ॥ म्रिसंज्ञकस्य यस्तकारः स परो भवति इतौ परे। पटत्पटेति।

औ डाचि ॥ १०३ ॥ डाजंते औ परे तकारः परो भवति। पटपटाकरोति। दमदमा भवति। छमछमास्यात्।

+ऋत्युर्वा ऋः ॥१०४॥ ऋति लृति वा उः ऋवर्णस्य लृवर्णस्य च ऋर्वा भवति। पितॄषभः पितृऋषभः। पितृऋषभः। पितॄकारः। पितृर्लृकारः पितृलृकारः ऋतीति किं ! प्रार्थः।

स्वेऽको दीः ॥ १०५ ॥ अकः स्वेऽचि परे दीर्भवति। देवाग्रे। विद्यांतः। दधीदं। मुनीशः। साधूदितं। वधूदरं। मातॄकारः। होतॄ ऌकारः। होतॄकारः। स्व इति किं ! दध्यशान।

*सुटीदुतः प्राक्स्वं ॥ १०६ ॥ पूर्वस्याकः इदुतः स्वं दीर्भवति अजादौ सुटि परतः। मुनी। साधू। सुटीति किं ? गुरून्। इदुत इति किं ! शुद्धे।

शसि ॥ १०७ ॥ प्राक्स्वं दीर्भवति शसि परतः। मालाः। बुद्धीः। गौरीः।

*न्पुंसि ॥ १०८ ॥ पुंसि शसो नकारादेशो भवति। कवीन्। जिनान्। मुनीन्। साधून्।

पूर्वोऽमि ॥ १०९ ॥ अकः सुट्यमि परतो द्वयोरेकः पूर्वो भवति। जिनं। मुनिं। साधुं। बुद्धिं। धेनुं। वधूं। नदीं। सुटीति किं ! अचिनवं।

*पदेऽत्येङः ॥ ११० ॥ एङः पदांतादकारादौ पदे परतः परः पूर्वो भवति। मुनेऽनघ। साधोऽत्र। पद इति किं?नयनं।लवनं। अतीति किं ! ते इह।

ङसङस्योः ॥ १११ ॥ एङः परयोः ङस्ङसि इत्येतयोरति परतः परः पूर्वो भवति। मुनेः स्वं। मुनेरागच्छति। धोः स्वं।धोरायाति।

ऋत उः ॥११२॥ ऋकारांतात् ङसङस्योरति उर्भवति द्वयोरेकः।पितुःस्वं। पितुरागच्छति।

*ख्यत्योऽतः ॥ ११३ ॥ ख्य त्य इत्येताभ्यामनच्काभ्यां परस्य ङसङस्योरत उर्भवति। सख्युः। पत्युः स्वमागच्छति वा। ख्यत्य ग्रहणं किं ! मुख्यस्य। मुख्यात्। अपत्यस्य। अपत्यात्।

*हशि रेः ॥ ११४ ॥ अतः परस्य रेः हशि परे उर्भवति। को हसति। धर्मो जयति।

इशीति किं ? कश्चित् । रेरिति किं स्वर्याहि । अत इति किं ? मुनिर्भूते । देवा यांति ।

*भति ॥ ११५ ॥ अतो रेरुर्भवति भकारे परे । सर्वज्ञोऽस्ति । अतीति किं ? स एषः ।

*गोर्वेङ् ॥ ११६ ॥ गोरेङ् पदे अति परतः एङ् वा स्यात् । गो अग्रं, गोग्रं, गवाग्रं । गोरिति किं ? चोऽग्रं । एङ् इति किं ? चित्रग्वग्रं ।

÷अवोऽनक्षेऽचि ॥ ११७ ॥ गोरेङः अवादेशो भवति वा अक्षवर्जितेऽचि परे । गवाग्रं, गोग्रं । गवेश्वरः, गवीश्वर । गवर्णे । गवृणं । अनक्ष इति किं ? गो-अक्षे गोक्षे । पदे इति किं ? गवे—गवां ।

*इंद्रे ॥ ११८ ॥ गोरेङः अवो भवति इंद्रे परतः । गवेंद्रः ।

÷वातायनेऽक्षे ॥ ११९॥ वातायनेऽर्थे गोरेङः अवो भवत्यक्षे परतः । गवाक्षः । वातायन इति किं ? गो—अक्ष—गोक्षं ।

*पान्नानितौ ॥१२०॥ पसंज्ञकादितिशब्दवर्जितेऽचि परे यदुक्तं तन्न भवति । भो देवदत्ता ३ इदमानय।अनिताविति किं ? सुमंगला ३ इति । सुमंगलेति ।

*देः ॥ १२१ ॥ दिसंज्ञकाद् यद् प्राप्नोति तन्नास्त्यचि परतः । मुनी अत्र । पटू इमौ । द्वे इमे । अमी अश्वाः ।

*वेकोऽसेऽस्वे प्रः ॥१२२॥ इकः अस्वेऽचि परतः प्रो वा भवत्यसे पदे । दधि अत्र । दध्यत्र । नदि एषा । नद्येषा । मधु इदं । मध्विदं । इक इति किं ? मुनयाचर व्रतं । अस इति किं ? बध्वानमं । मधुदकं । पद इति किं ? नद्यौ । बध्वौ । अस्व इति किं ? नदीयं ।

ऋत्यकः ॥ १२३ ॥ अकः ऋकारे लकारे च वा प्रो भवति । मह ऋषिः । महर्षिः । खट्व ऋश्यः । खट्वर्श्यः । धूलि ऋतुः, धूल्यृतुः । बधु ऋणं । बध्वृणं । कर्तृ ऋश्यः । कर्त्रृश्यः । कन्य लृकारः । कन्यल्कारः । ऋतीति किं ? दंडाग्रं । अक इति किं ? स्वाता वृक्षे ।

*दिवो हल्युत् ॥ १२४ ॥ दिवः पदस्य हलि परे उद् भवति । द्युभ्यां । द्युभिः । द्युभ्यः । द्युषु । हलीति किं ? दिवौकसः ।

*तोऽनञ्से सात्सोः खं ॥ १२५ ॥ तकारस्थानिनः सकारात् सोः खं भवति हल्यनञ्से । स ददाति । एष रक्षति । अनञ्स इति किं ? असो गच्छति । अनेषो गच्छतिसादिति किं ? सकः पचति । एषको हसति । हलीति किं ? सोऽर्थः । एषोऽत्र ।

*तदोऽह्रिपूर्तौ ॥ १२६ ॥ तत्स्थानिनः सकारात् सोः खं भवत्याचि परतः पादपूरणे ।

सैष दाशरथी रामः सैष राजा युधिष्ठिरः ।
सैष कर्णो महात्यागी, सैष पार्थो धनुर्धरः ॥

अंह्रिपूर्ताविति किं ? स एष भवतो राजा योऽन्याय्ये पथि वर्तते ।

÷क्रीञ्तन्यवस्यादेः प्रायः ॥ १२७ ॥ अवगेरादेः खं भवति क्रीञ्तन्योः परतः प्रायः । वक्रयः । अवक्रयः । वतंसः । अवतंसः ।

÷धाञ्नह्योपेः ॥ १२८॥ अपेरादेः खं भवति धाञ्नह्योःप्रायः।पिहितं।अपिहितं।पिनद्धं।अपिनद्धं।

संपर्युपात् कुः सुड् भूषे ॥ १२९॥ समादिभ्यः परस्य कृञः सुड् भवति भूषार्थे । संस्करोति । समस्करोत् । संचस्कार । परिष्करोति । परिचस्कार । उपस्करोति बालं । उपास्करोत् । उपचस्कार कन्यां । भूष इति किं ? उपकरोति ।

समवाये ॥ १३० ॥ संपर्युपात् कृञः समवायेऽर्थे सुट् भवति । तत्र नः संस्कृतं । संस्कृतो मरिचैर्यूषः ।

उपात् प्रतियत्नवैकृतवाक्याध्याहारे

॥ १३१ ॥ उपात् कृञः सुडागमो भवति प्रतियत्नाद्यर्थे । एधो दकस्योपस्कुरुते । उपस्कृतं भुंक्ते । उपस्कृतं जल्पति ।

किरतेर्लवे ॥ १३२ ॥ उपात् किरतेःसुड् भवति लवे लवनार्थे । उपस्कारं मद्रकाः लुनंति। लव इति किं ? उपकिरति धान्यं काकः ।

वधे प्रतेश्च ॥ १३३ ॥ प्रतेरुपाच्च किरतेर्वधेऽर्थे सुट् स्यात् । प्रतिस्कीर्णं उपस्कीर्णं ह ते वृषल भूयात् । वध इति किं ? प्रतिकीर्णं बीजं।

* चतुष्पच्छ्वपाद्धर्षात् ॥ १३४ ॥ अपात् किरतेः सुट् भवति हर्षाच्चतुष्पदर्थे । अपस्किरते वृषभो हृष्टः । चतुष्पदीति किं ? अवाकिरति बालो हृष्टः । हर्षादिति किं ? अपकिरति श्वा।

*विशुनि भक्ष्याश्रयार्थे ॥१३५॥ अपात् किरतेःसुड् भवति वौ शुनि च भक्ष्याश्रयाय चेत्। अपस्किरते कुक्कुटो भक्ष्यार्थी । अपस्किरते श्वा आश्रयार्थी।

*विष्किरो वौ वा ॥१३६॥ विकिरतेः कत्ये वाव‍र्थे सुड् वा निपात्यः । विस्किरः । विकिरः शकुनिः ।

*प्रात्तुंपेर्गवि ॥१३७॥ प्रात्परस्य तुंपतेर्गवि गम्यमाने सुट् भवति । प्रस्तुंपति गौः । गवीति- किं ? प्रतुंपति स्त्री ।

*कुस्तुम्बुर्वास्पदाश्चर्यावस्करापस्करावरस्परमस्करमस्करितस्करबृहस्पतिरथस्पा जातिप्रतिष्ठाद्भुतवर्चस्करथांगक्रियासातत्यवेणुपारिव्राट्चौरदेवतानदीषु ॥ १३८ ॥ कुस्तुंबुरुप्रभृतयः ससुट्का निपात्यंते जात्यादिष्वर्थेषु । कुस्तुंबुरुः धान्याकतृणजातिः । आस्पदं प्रतिष्ठा । आश्चर्यमद्भुतं । अवस्करोऽवर्चस्कं । अपस्करो रथावयवः । अवरस्परा भुंजते क्रियासातत्ये । मस्करो वेणुः। मस्करी परिव्राजकः। तस्करश्चौरः। बृहस्पतिर्देवता । रथस्पा नदी । अन्यत्र–कुतुंबुरुःवृक्षः।आपदं । आचर्यं व्रतं । अवकरः । अपकरः। अवरपरः। मकरो ग्राहः । मकरी समुद्रः। तत्करः । बृहत्पतिः । रथपाः ।

*प्रस्कण्वहरिश्चंद्रावृषी ॥१३९॥ एतौ ससुट्कौ निपात्यौ ऋषी चेत् । प्रस्कण्वः । हरिश्चंद्रः ऋषिः । प्रकण्वो देशः । हरिचंद्रो राजाऽन्यत्र ।

*पारस्करो देशे ॥१४०॥ पारात् करे सुण्णिपात्यते देशे गम्यमाने । पारस्करो देशः । पारकरोऽन्यः ।

*नगरे ॥१४१॥ नगरे च पारस्करो निपात्यते । पारस्करो नगरं ।

*कास्तीराजस्तुंदास्कथं ॥ १४२ ॥ एषां घोः सुण्णिपात्यते नगरे । कास्तीरं । अजस्तुंदं । आस्कथं। अन्यत्र–कातीरं । अजतुंदं । आकथं ।

*कारस्करं ॥१४३॥अस्य घोः सुण्णिपात्यः । कारस्करं नगरं । कारकरमन्यत् ।

*वृक्षे ॥१४४॥वृक्षे च कारस्करं निपात्यते । कारस्करो वृक्षः । कारकरोऽन्यः ।

*करस्करोऽद्रौ च ॥ १४५ ॥ करस्करो निपात्योऽद्रौ वृक्षे च । कारस्करो गिरिर्वृक्षश्च । करकरोऽन्यः ।

*किष्कादयः ॥ १४६ ॥ किष्कुप्रकाराः ससुट्का निपात्यंते । किमष्कौ मखं प्रमाणे । किष्कुः वितस्तिः हस्तो वा । किष्किंधः पर्वतः । किमो द्वित्वमखे । वनस्पतिः । प्रायश्चित्तमित्यादि ।

*श्रिताश्रितप्रमाणे गोष्पदं ॥ १४७ ॥ एष्वर्थेषु गोः परस्य पदस्य घोः सुट् षत्वं च निपात्यं । गोष्पदो देशः—गोभिः सेवितः । गोष्पदमरण्यं तैरसेवितं । गोष्पदपूरं वृष्टो देवः । गोपदमन्यत्र ।

याबलुप् ॥ १४८ ॥ वौ अनुविति च

एतद् द्वयमधिकृतं ज्ञेयं । वक्ष्यति—कायाः स्तोकादेः । स्तोकान्मुक्तः । खाविति किं ? निस्तोकः । प्राग्गोः खावधिकारः । अनुबधिकारश्च प्राकानकादेशात् ।

कायाः स्तोकादेः ॥१४९॥ स्तोकादिभ्यः परस्याः कायाः अनुप् भवति । स्तोकान्मुक्तः कतिपयान्मुक्तः । अल्पान्मुक्तः । अंतिकादागतः अभ्यासादागतः । दूरादागतः । विप्रकृष्टादागतः । कृच्छ्राल्लब्धः । स्तोकादेरिति किं ? वृकाद् भयं वृकभयं ।

ब्राह्मणाच्छंसी ॥ १५० ॥ अत्र कानुप् निपात्यः । ब्राह्मणाच्छंसी ।

ट ओजःसहोंऽभस्तपोंऽजसः॥१५१॥ एभ्यो भैकस्यानुप् भवति । ओजसाकृतं । सहसाकृतं । अंभसाकृतं । तपसाप्राप्तं । अंजसाकृतं ।

+पुंसानुजजनुषांधौ ॥ १५२ ॥ एतौ कृतटानुपौ निपात्यौ । पुंसानुजा कन्या । जनुषा जन्मनांधः-जनुषांधः ।

टत्यात्मनः ॥ १५३ ॥ टडंते धौ परे आत्मनः टोऽनुब्भवति । आत्मनापंचमः । आत्मनाषष्ठः ।

* मनसश्चाज्ञायिनि ॥१५४॥ मनःशब्दादात्मनश्चाज्ञायिनि परे टानुब्भवति । मनसाज्ञायी । आत्मनाज्ञायी ।

खौ ॥१५५॥ मनसष्टानुब्भवति खुविषये । मनसागुप्ता । मनसागता ।

* केः परात्मनः ॥ १५६ ॥ परात्मभ्यां केरनुब्भवति खौ । परार्थं पदं परस्मैपदं । परस्मैभाषः । आत्मनेपदं । आत्मनेभाषः । परात्मन इति किं ? तद्धितं ।

ईपोऽद्धलः ॥ १५७ ॥ अदंतात् हलंताच्च परस्या ईपोऽनुप् भवति । वनेहरिद्रकाः । कूपेपिशाचकाः । त्वचिसारः । दृषदिमाषकः । अद्धल इति किं ? नदीकुक्कुटिका । खाविति किं ? अक्षशौंडः ।

*कारे प्राचां हलि ॥ १५८ ॥ अद्धल्भ्यां ईपोऽनुप् भवति हलादौ प्राचां देशे कारविषये । हलेद्विपदिका । समिधिमाषकः । कार इति किं ? अभ्याहितपशुः । प्राचामिति किं ? यूथवृषः । हलीति किं ? अविकटोरणः ।

मध्यांताद् गुरौ ॥ १५९ ॥ मध्यांताभ्यां ईपोऽनुप् भवति गुरौ धौ परतः । मध्येगुरुः । अंतेगुरुः ।

अकामेऽमूर्धमस्तकात् स्वांगात् ॥ १६० ॥ मूर्धमस्तकवर्जिताद् स्वांगात् अकामे धौ परतः ईपोऽनुप् भवति । कंठेकालः । उरसिलोमा । उदरेमणिः । शिरसिशिखः । अकाम इति किं ? मुखे कामोऽस्य मुखकामः । अमूर्धमस्तकादिति किं ? मूर्धशिखः । मस्तकशिखः । स्वांगादिति किं ? पानशौंडः ।

*बंधे घञि वा ॥ १६१॥ अद्धलंतादीपोऽनुब्भवति बध्नातौ घञंते परे । हस्तेबंधः । हस्तबंधः । चक्रेबंधः । चक्रबंधः । घञीति किं ? चक्रबद्धः ।

, षे कृति बहुलं ॥ १६२॥ अद्धलंतात् षसे कृदंते धौ बहुलं ईपोऽनुप् भवति । प्रवाहेमूत्रितं भस्मनिहुतं । उदकेविशीर्णं । पात्रेसमिताः । क्वचिन्न भवति—ग्रामकारकः । क्वचिद् विभाषा । सरसिरुहं, सरोरुहं । क्वचिदन्यदेव—हृदयं स्पृशतीति हृदिस्पृक् । ष इति किं ? धन्वनि कारकोऽस्य धन्वकारकः । कृतीति किं ? अक्षधूर्तः ।

+यपोनिमतिचरेऽपः ॥ १६३ ॥ अप्शब्दादीपोऽनुप् भवति यादिषु परतः । अप्सव्यः । अप्सुयोनिः । अप्सुमतिः । अप्सुचरः ।

+जे ॥ १६४ ॥ अपः ईपोऽनुब्भवति के

घौ परतः । अप्सुजः ।

+शुनाबृड्वर्षाशरत्काकात् ॥ १६५ ॥ एभ्य ईपोऽनुप् भवति जे घौ परतः । दिविजः । प्रावृषिजः । वर्षासुजः । शरदिजः । कालेजः ।

+शरवरक्षरवर्षाद् वा ॥ १६६ ॥ शरादिभ्य ईपो जे वाऽनुब्भवति । शरेजः । शरजः । वरेजः । वरजः । क्षरेजः। क्षरजः। वर्षेजः।वर्षजः।

+शयवासिवासेऽकाकात् ॥ १६७ ॥ अकालवाचकादीपो वाऽनुब् भवति शयादिषु परतः । बिलेशयः । बिलशयः । वनेवासी । वनवासी । ग्रामेवासः । ग्रामवासः । अकालादिति किं ? पूर्वाह्णशयः । अपराह्णशयः ।

*कालाज्झकालतने ॥ १६८ ॥ कालवाचकादीपो वानुब्भवति झादिषु परतः। पूर्वाह्णेतरां । पूर्वाह्णतरे।पूर्वाह्णेतमां।पूर्वाह्णतमे।अपराह्णेतमां। अपराह्णतमे।पूर्वाह्णेकाले।पूर्वाह्णकाले । अपराह्णेकाले।अपराह्णकाले।पूर्वाह्णेतनः।पूर्वाह्णतनः। अपराह्णेतनः । अपराह्णतनः। कालादिति किं ? शुक्लतरे । शुक्लतमे ।

×नेन्सिद्धस्थे ॥ १६९ ॥ इन्सिद्धस्थेषु परेषु ईपोऽनुप् नास्ति । स्थंडिलशायी । कांपिल्यसिद्धः।सांकास्यसिद्धः। पर्वतस्थः। कूटस्थः।

+गोषुचरः ॥ १७० ॥ अत्रेपोऽनुप् निपात्यः । गोषुचरः ।

तायाः शापे ॥ १७१॥ तानुप् भवति शापे आक्रोशे गम्यमाने । चोरस्यकुलं । चोरस्यभार्या। दासस्य कुलं।दासस्यभार्या।शाप इति किं?दासकुलं।

पुत्रे वा ॥ १७२ ॥ शापे ताया वानुब् भवति पुत्रे घौ । दास्याःपुत्रः, दासीपुत्रः ।

+वाक्दिग्पश्यतो युक्तिदंडहरे ॥ १७३ ॥ एभ्यो युक्त्यादिषु तानुब् भवति । वाचोयुक्तिः। दिशोदंडः।पश्यतोहरः।वाचस्पतिरित्यपि दृश्यते ।

+शेफपुच्छलांगूलेषु खौ शुनः ॥ १७४ ॥ श्वन्शब्दात्तानुब् भवति शेफादिषु खौ । शुनःशेफः । शुनःपुच्छः । शुनोलांगूलः । खाविति किं ? श्वशेफं ।

*घुदेवाद्दासप्रिये ॥ १७५ ॥ दिव्देवाभ्यां तान्नुभवति दासप्रिययोः परतः खौ । दिवोदासः। देवानांप्रियः ।

ऋतां विद्यायोनिसंबंधात् ॥ १७६ ॥ ऋकारांतानां विद्यासंबंधात् योनिसंबंधाच्च वर्तमानानां तानुप् भवति । होतुःपुत्रः । होतुरंतेवासी । पोतुःपुत्रः । पोतुरंतेवासी । मातुःपुत्रः। मातुरंतेवासी । ऋतामिति किं ? उपाध्यायपुत्रः। विद्यायोनिसंबंधादिति किं ? भर्तृगृहं ।

वा स्वसृपत्योः ॥ १७७ ॥ ताया वाऽनुब्भवति अनयोः परतः । मातुःस्वसा । मातुःष्वसा । मातृष्वसा । ननांदुःपतिः । ननांदृपतिः। योनिसंबंधादिति किं ? भ्रातृस्वसा ।

*डान् द्वंद्वे ॥ १७८ ॥ ऋकारांतानां द्वंद्वे डान् भवति घौ परतः । होतापोतारौ । नेष्टोद्गातारौ । मातादुहितरौ । यातानन्नांदरौ ।

*पुत्रे ॥१७९॥ ऋतां पुत्रे घौ डान् भवति । पितापुत्रौ । मातापुत्रौ ।

* अग्नेंद्रादिषु देवतानां ॥ १८० ॥ द्वंद्वे पूर्वस्य डान् भवति अग्नेंद्रादिषु घुषु परतः । इंद्रासोमौ । इंद्राबृहस्पती । सूर्याचंद्रमसौ । अग्नेंद्रादिष्विति किं ? ब्रह्मप्रजापती । दिवाकरनिशाकरौ । स्कंदविशाखौ । शिववैश्रवणौ । देवतानामिति किं ? अग्नींद्रौ माणवकौ ।

षोमवरुणेऽग्नेरीः ॥ १८१ ॥ अग्नेः षोमवरुणयोः परयोर्देवताद्वंद्वे ईत्वं स्यात् । अग्नीषोमौ । अग्नीवरुणौ ।

* नैप्यविष्ण्वद्वे ॥ १८२ ॥ अग्नेरैब्विषये

विष्ण्विंद्रहीने घौ कानीत्वे न स्तः। आग्निमारुतः। आग्निवारुणी । ऐपीति किं ? अग्नामरुतौ । अविष्ण्विंद्र इति किं ? आग्नावैष्णवं । आग्नेंद्रं ।

उषासोषसः ॥ १८३ ॥ उषस उषासा इत्ययमादेशो भवति देवताद्वंद्वे । उषश्च नक्तं च उषासानक्तं । उषासानक्ते ।

दिवो द्यावा ॥१८४॥ दिवो द्यावा इत्ययमादेशो भवति देवताद्वंद्वे । द्यौश्च क्ष्मा च द्यावाक्ष्मे । द्यावाभूमी ।

दिवस् पृथिव्यां वा ॥१८५॥ दिवः दिवस् भवति पृथिव्यां देवताद्वंद्वे वा । दिवस्पृथिव्यौ । द्यावापृथिव्यौ ।

मातरपितरौ ॥ १८६ ॥ मातृपित्रोर्द्वंद्वे द्वयोररादेशो वा निपात्यः । मातरपितरौ । मातापितरौ ।

*स्त्र्यसुपि सर्वं पुंवत् ॥१८७॥ स्त्रिसंज्ञकं सर्वं पुंवद् भवति असुपि परतः । सर्वासां प्रियः सर्वप्रियः । भवत्याः पुत्रः-भवत्पुत्रः । एकक्षीरं । सर्वकाम्यति । स्त्रीति किं ? विद्यानिवासः । असुपीतिकिं ? सर्वस्यै । यस्याः । तस्याः । सर्वमिति किं?सर्वा प्रिया अस्य सर्वप्रियः । सर्वमनोज्ञः । इत्यादिनिषेधविषयेऽपि यथा स्यात् ।

*स्त्र्युक्तपुंस्कादनूरेकार्थेऽडट्प्रियादौ स्त्रियां ॥ १८८ ॥ स्त्री उक्तपुंस्कात् परः स्त्रीत्यः ऊत्यवर्जितः एकार्थे डडंतप्रियादिवर्जिते स्त्रियां वर्तमाने घौ पुंवत् पुलिंगवद् भवति । दर्शनीया भार्या यस्यासौ दर्शनीयभार्यः। शोभनभार्यः।चारुजंघः। प्रसूतभार्यः। स्त्रीति किं?ग्रामणि कुलं दृष्टिरस्य ग्रामणिदृष्टिः।उक्तपुंस्कादिति किं?सालावृंदारिकः। तनुकेशीभार्यः। अनूरिति किं?वामोरूभार्यः एकार्थ इति किं?कल्याण्याः माता कल्याणीमाता। अडट्प्रियादाविति किं?कल्याणी पञ्चमी आसां कल्याणीपञ्चमा रात्रयः। कल्याणीमनोज्ञः। कल्याणीभक्तीः। स्त्रियामिति किं?कल्याणीप्रधानः ।

तसादौ ॥१८९॥ तसादिषु परतः स्त्री पुंवद् भवति । तस्यास्ततः। तस्यां-तत्र।यथा प्रकृत्या यथा।तथा।अजय्यां।आढ्यतरा।आढ्यतमा इत्यादि।

*इति भो जातिश्च ॥१९०॥ स्त्री जातिरन्या च भसंज्ञा इति पुंवद् भवति। गार्ग्यायण्याः अपत्यं-गार्गो जाल्मः। गार्गिको जाल्मः । एन्यां साधुः एत्यः। हस्तिनीनां समूहः हास्तिकं। भ इति किं? कठीरूप्यं ॥

×ढेऽग्निः ॥ १९१ ॥ अग्निः पुंवद् भवति ढे परतः। अग्नायी देवताऽस्य आग्नेयः । नियमार्थोऽयं योगः । ढेऽग्निरेव पुंवद् नान्यः। श्यैनेयः । रौहिणेयः ।

*गुणस्त्वतलि ॥ १९२ ॥ गुणवचनं त्वतलौ परतः पुंवद् भवति । पट्व्याः भावः पटुत्वं, पटुता । मृदुत्वं । मृदुता।गुण इति किं ? कठीत्वं ।

+बह्वल्पार्थः शसि ॥ १९३ ॥ बह्वर्थोऽल्पार्थश्च शसि इति पुंवद् भवति । बह्वीभ्यो देहि बहुशो देहि । अल्पशो देहि ।

+मृगक्षीरादिषु ॥ १९४ ॥ एषु वृत्तिपदेषु यत्पूर्वपदं तदस्त्रियामनेकार्थे च घौ पुंवद् भवति। मृग्याः क्षीरं मृगक्षीरं । कुक्कुटांडं । मृगपदं ।

क्यङ्मानिनोः ॥ १९५ ॥ क्यङि मानिनि च परतः स्त्री पुंवद् भवति।एनीवाचरति एतायते। हरितायते । दर्शनीयां मन्यते दर्शनीयमानी । शोभनमानी ।

न वुद्वृत्कोङ् ॥ १९६ ॥ वोर्वृतश्च यः ककारस्तदुङ् स्त्री पुंवन्न भवति । पाचिकाभार्यः । पाचिकातः । पाचिकायते । पाचिकामानिनी । लाक्षिकीशाटिकः । लाक्षिकातः । लाक्षिकायते । लाक्षिकामानिनी । वुद्वृद्ग्रहणं किं ? मूकभार्यः ।

अस्याकभार्यः।

हद्भ्युः ॥ १९७ ॥ ह्वदंता युक्ष स्त्री पुंवं-भाक्तिः। पंचमीभार्यः। दशमीभार्यः। पंचमीतः। पंचमीयते। पंचमीमानिनी। दत्ताभार्यः। गुप्ताभार्यः। दत्तातः। दत्तायते। दत्तामानिनी।

*ऐक्भृदरक्तविकारे ॥ १९८ ॥ रक्तविकार-वर्जितेऽर्थे ऐप्निमित्तं यद् हृत् तदंता स्त्री पुंवन्न भवति। आत्सीभार्यः। माथुरीभार्यः। माथु-रीतः। माथुरीयते। माथुरीमाननी। ऐबिति किं? वन्यभार्यः। त्रिपृष्टायनिभार्यः। हृदिति किं? कुंभकारभार्यः। पुष्पलावभार्यः। अरक्त-विकारे इति किं? काषायी बृहतिका अस्य काषायबृहतिकः। लौही ईषा यस्य लौहेषो रथः।

अमानिनीत्स्वांगात् ॥ १९९ ॥ स्वांगाद् य ईत्तदंता स्त्री पुंवन्नास्त्यमानिनी यौ परतः। दीर्घकेशीभार्यः। दीर्घकेशीतः। दीर्घकेशीयते। अमानिनीति किं? दीर्घकेशमानिनी। ईदिति किं? पृथुजघनभार्यः। स्वांगादिति किं? पट्वीभार्यः।

जातिः ॥ २०० ॥ जातिश्च स्त्री पुंवन्न भवति अमानिनि यौ परतः। कठीभार्यः। कठीतः। कठीयते। शूद्राभार्यः। शूद्रातः। शूद्रायते।

पुंवद् यजातीयदेशीये ॥२०१॥ स्त्री पुंवद् भवति यसंज्ञके से जातीयदेशीययोश्च परतः। वुहृत्कोऽपि पुंवद् भवति। पाचकवृंदारिका। पाचकजातीया। पाचकदेशीया। काशिकवृंदा-रिका। हद्भ्युरपि—पंचमवृंदारिका। पंचमजा-तीया। पंचमदेशीया। दत्तवृंदारिका। दत्तजा-तीया। दत्तदेशीया। ऐक्भृदरक्तविकारेऽपि पुंवद् भवति। माथुरवृंदारिका। माथुरजातीया। माथुरदेशीया। स्वांगादीतोऽपि—दीर्घकेशवृंदा-रिका। दीर्घकेशजातीया। दीर्घकेशदेशीया। जातिरपि—कठवृंदारिका। कठजातीया। कठदेशीया।

ङ्रूपकल्पचेलड्ब्रुवगोत्रमतहते मोऽने-काच: ॥ २०२ ॥ ईत्स्त्रीत्यांतस्यानेकाचः ङादिषु परतः प्रो भवति। गौरितरा। गौरि-तमा। गौरिरूपा। गौरिकल्पा। गौरिचेली। गौरिब्रुवा। गौरिगोत्रा। गौरिमता। गौरिमता। गौरिहता। कुमारितरा। कुमारितमा। कुमारि-रूपा। इत्यादि। अनेकाच इति किं? श्रितरा। श्रीतरा। ईदिति किं? दत्तातरा।

+गौरिभोगान्मतः खौ ॥ २०३ ॥ गौरि-भोगाभ्यां मत्वंताभ्यां खौ ईतः प्रो भवति ङा-दिषु परतः। गौरिमतितरा " गौरिमतितमा। भोगवतितरा। भोगवतितमा। एवं रूपादिष्वपि योज्यं। खौ" इति किं? गौरिमतिरूपा, गौरीमतीरूपा।

*वा मोः ॥ २०४ ॥ मुसंज्ञकस्य ङादिषु परत प्रो वा स्यात्। स्त्रितमा। स्त्रीतमा। लक्ष्मितमा लक्ष्मीतमा। वामोरुतरा। वामो-रूतरा। एवं—रूपादावपि। मोरिति किं? कारिकातरा।

वोगितः ॥ २०५ ॥ उगितः परस्य मोः प्रो वा स्यात् ङादिषु परतः। विदुषितरा, विदु-षीतरा। विद्वत्तरा। पचतितमा, पचंतीतमा। पचत्तमा। एवं--सर्वत्र। उगित इति किं? कुमारितरा। पुनर्वाग्रहणमुभयविकल्पार्थं।

आङ् महतो जातीये च ॥२०६॥ आका-देशो भवति महतो जातीये एकार्थे च यौ परतः महाजातीयः। महामुनिः। महापुरुषः। महा-प्राणाः। महाबाहुः। महात्मा। जातीये चेति-किं? महतः पुत्रः-महत्पुत्रः।

+करघासविशिष्टे वा ॥ २०७ ॥ महत-करादिषु परेषु आङ् वा स्यात्। महतः-कर महा-करः। महत्करः। महाघासः। महद्घासः। महाविशिष्टः। महद्विशिष्टः

*ङ्याः ॥ २०८ ॥ ङीत्यांतस्य महत् करादिष्वाङ् भवति । महत्याः करः-महाकरः। महाघासः । महाविशिष्टः ।

*अष्टनोऽबाशीत्योःस्यौ प्राक्शतात् त्रेस्त्रयः ॥२०९॥ द्वि अष्टन् इत्येतयोराङ् भवति । स्थिसंज्ञे धौ परत, शतात् प्राक् त्रेस्त्रयस् बसमशीतिं च वर्जयित्वा । द्वादश । द्वाविंशतिः । द्वात्रिंशत् । अष्टादश । अष्टाविंशतिः । अष्टात्रिंशत् । त्रयोदश । त्रयोविंशतिः । त्रयस्त्रिंशत् । व्यष्टनः त्रेरिति किं? चतुर्दश । अबाशीत्योरिति किं ? द्वित्राः । अष्टदशाः। त्रिदशाः ।द्व्यशीतिः त्र्यशीतिः।प्राक्शतादिति ।किं ? द्विशतं । द्विसहस्रं । अष्टशतं । अष्टसहस्रं । त्रिशतं । त्रिलक्षं ।

वा चत्वारिंशदादौ ॥२१० ॥ द्व्यादीनामाङ् वा भवति चत्वारिंशदादौ परतः । द्विचत्वारिंशत् । द्वाचत्वारिंशत् । अष्टाचत्वारिंशत् । अष्टचत्वारिंशत् । त्रयश्चत्वारिंशत् । त्रिचत्वारिंशत् । द्वापंचाशत् । द्विपंचाशत् । अष्टापंचाशत् । अष्टपंचाशत् । त्रयःपंचाशत् । त्रिपंचाशत् । द्वानवतिः । द्विनवतिः । अष्टानवतिः । अष्टनवति । त्रयोनवतिः । त्रिनवतिः ।

*दशन्येका ॥२११॥ दशनि धौ एकस्य दीर्घो निपात्यते। एकादश। दश्नीति किं?एकाविंशतिः।

+षष उर्दतरि चादेर्घोष्टुः ॥२१२॥ षष उर्भवति दतृशब्दे दाशिन च परे धोरादेष्टुश्च । षोडन् । षोडश ।

+ धात्ये वा ॥२१३॥ षष उत्वं वा धात्ये धोरादेः टुश्च नित्यं स्यात् । षोढा । षड्ढा ।

+नस् नासिकायास्तस्क्षुद्रे ॥ २१४ ॥ नासिकाशब्दस्य नस् भवति तस्त्ये क्षुद्रे च परतः। नस्तः । नसक्षुद्रः ।

+येऽवर्णे ॥२१५॥ नासिकाया नस् भवति अवर्णे यत्ये परे । नस्यः । अवर्ण इति किं ? नासिक्यो वर्णः ।

हृदयस्य हृल्लेखाण्यलासे ॥ २१६ ॥ हृदयस्य हृद् भवति लेखादिषु परतः । हृल्लेखः। हार्दं । हृद्यं । हृल्लासः ।

*पद् पादस्याज्यातिगोपहते ॥ २१७ ॥ पादस्य पदादेशो भवति आज्यादिषु परतः । पदाजिः । पदातिः। पदगः । पदोपहतः ।

पद् ये ॥२१८॥पादस्य पदित्ययमादेशो भवति यत्ये परतः । पद्यं ।

हिमकाषिहतौ ॥ २१९ ॥ पादस्य पद् भवति हिमादिषु परतः। पद्धिमं। पत्काषी। पद्धतिः

*शस्यृचः ॥२२०॥ ऋचः संबंधिनः पादस्य पदादेशो भवति शसि त्ये परे । पच्छः गायत्रीं शंसति । ऋच इति किं ? पादशः श्लोकं कथयति ।

वा निष्कघोषमिश्रशब्दे ॥२२१॥ पादस्य पद् वा भवति निष्कादिषु परतः । पन्निष्कः । पादनिष्कः । पद्घोषः । पादघोषः । पन्मिश्रः । पादमिश्रः । पच्छब्दः । पादशब्दः ।

*उदकस्योदैकहलि पूर्ये ॥ २२२ ॥ उदकस्य उद इत्ययमादेशो भवति वा पूर्यर्थे एकहलादौ धौ परतः। उदकुंभः । उदककुंभः । उदपात्रं । उदकपात्रं । एकहलीति किं ? उदकस्थाली । पूर्य इति किं ? उदकगिरिः ।

मंथौदनसक्तुबिन्दुवज्रभारहारवीवधगाहे ॥२२३॥ उदकस्योदो भवति वा मंथादिषु परतः उदमंथः। उदकमंथः । उदौदनः । उदकौदनः । उदसक्तुः । उदकसक्तुः। उदबिंदुः । उदकबिंदुः। उदवज्रः।उदकवज्रः।उदभारः । उदकभारः । उदहारः। उदकहारः। उदवीवधः । उदकवीवधः । उदगाहः । उदकगाहः ।

*धिमेघवासवाहने ॥ २२४ ॥ ध्यादिष्व-

कस्योदो भवति । उदधिः । उदपेषं पिनष्टि । उदवासः । उदवाहनः ।

*घोश्च खौ ॥ २२५ ॥ उदकस्य प्राक्पदस्य घोश्च खावुदो भवति । उदमेघः औदमेघिः । उदवाहः । औदवाहिः । शीतोदा । क्षीरोदा । लवणोदः । कालोदः । खाविति किं ? उदकपर्वतः ।

*घोए ॥ २२६ ॥ पूर्वपदस्य घोश्च उब्वा स्यात् । देवदत्तः । देवः । दत्तः । भीमसेनः भीमः । सेनः । सत्यभामा । सत्या । भामा ।

*इकः प्रोऽङ्कीयुक्यणश्चेः ॥ २२७ ॥ इगंतस्य प्रो वा स्यात् घौ स चेदिक् कीत्यः इयुवोः स्थानी यणादेशो क्षिश्च न भवति । लक्ष्मीपुत्रः । लक्ष्मिपुत्रः । ग्रामणीपुत्रः। ग्रामणिपुत्रः। यवलूपुत्रः । यवलुपुत्रः। खलपुपुत्रः। खलपूपुत्रः। इक इति किं ? खट्वापादः । अङ्यादेरिति किं ? गार्गीपुत्रः । भ्रींकुलं, भ्रुकुलं । कौमुदगंधीपतिः । वृषलीभूतं ।

ङ्यापोः क्वचित्खौ ॥ २२८ ॥ ङी आप् इत्येवमंतस्य क्वचित् प्रो भवति । रेवतिमित्रः महित्राता । शिलवहः । मंदुरजं । क्वचिन्न स्यात् । नांदीमुखं । गंगाद्वारं। क्वचिद्द्वयं । पृथिवीदत्तः, पृथिविदत्तः । गंगादेवी । गंगदेवी । क्वचिदन्यत्-तीर्थंकरः तीर्थकरः । ङ्याप इति किं । श्रीपुरं । खाविति किं ? नदीस्रोतः ।

त्वे ॥ २२९ ॥ ङ्यापोस्त्वे क्वचित् प्रो भवति । रोहिणित्वं । रोहिणीत्वं । अजत्वं । अजात्वं ।

*मालेषीकेष्टकस्यांतस्य च भारितूलचिते ॥ २३० ॥ मालादीनां तदंतानां च भार्यादिषु परतः प्रो भवति । मालभारी । मालभारिणी । उत्पलमालभारिणी । इषीकतूलं । गुंजेषीकतूलं । इष्टकचितं । पक्वेष्टकचितं ।

÷भ्रुवः कुटिकुंसेऽश्च ॥२३१॥ कुटिकुंसयोः परतो भ्रुवः प्रो भवति अश्चांतादेशः । भ्रुकुटिः । भ्रकुटिः । भ्रुकुंसः । भ्रकुंसः ।

खित्यश्चे: कृति ॥ २३२ ॥ अजंतस्याश्चेः प्रो भवति खित्कृति परतः । खट्वंमन्या । हरिणिंमन्या । कालिंमन्या । रोहिणिंमन्या । अश्चेरिति किं ? दोषामन्यमहः। दिवामन्या रात्रिः

मुमचः ॥ २३३ ॥ अजंतस्याश्चेः मुम् भवति खित्कृति परतः । जनमेजयः । स्तनंधयः । प्रियंवदः । क्षेमंकरः । अच इति किं ? विद्वन्मन्यः ।

अमेकाचोऽम्वत् ॥ २३४ ॥ एकाचोऽजंतस्याम् भवति खित्कृति अमीव चास्मिन् कार्यं स्यात् । गांमन्यः । स्त्रींमन्यः । नरंमन्यः । एकाच इति किं ? लेखाभ्रूंमन्या । अच इति किं ? विन्मन्यः ।

सत्यागदास्तोः कारे ॥ २३५ ॥ सत्यादीनां कारे परे मुम् भवति । सत्यंकारः । अगदंकारः । अस्तुंकारः ।

*भ्राष्ट्राग्न्योरिंधे ॥ २४६ ॥ इंधे घौ मुम् भवति भ्राष्ट्राग्न्योः । भ्राष्ट्रमिंधः । अग्निमिंधः ।

×भद्रोष्णयोः करणे ॥ २३७ ॥ अनयोः करणे घौ मुम् भवति । भद्रंकरणं । उष्णंकरणं ।

÷गिलगिलगिलयोरगिलस्य ॥ २३८ ॥ गिलांतमुक्तस्याजंतस्य गिलागिलागिलयोः मुम् भवति । तिमिंगिलः । तिमिंगिलगिलः । अगिलस्येति किं ? तिमिंगिलं गिलतीति तिमिंगिलगिलः ।

÷धेनुभव्यामध्यंदिनलोकंपृणानभ्यासमित्याः ॥२३९॥ धेन्वादीनां भव्यादिषु मुम् निपात्यः । धेनुंभव्या । मध्यंदिनं । लोकंपृणः । अनभ्यासमित्यः ।

स्तनमाल्यत्-अतस्तनत् । अदध्वनत् ।

*वेर्हीरऽनजादेः॥२१२॥अनजादेश्चस्य वेर्हीर्भवति णौ कच्परे अनग्लोपे । अजीहरत् । अबूबुधत् । वेरिति किम् ? अविव्रजत् । अनजादेरिति किं? और्णुनवत् । णाविति किं ? अररक्षत् ।

स्मृदृत्वरप्रथम्रदस्तृस्पशोऽत् ॥ २१३ ॥ एषां चस्यात् भवति कच्परे णौ परतः । सन्वद्भावापवादः । असस्मरत् । अददरत् । अतत्वरत् । अपप्रथत् । अमम्रदत् । अतस्तरत् । अपस्पशत् ।

वा वेष्टिचेष्ट्योः ॥२१४॥ एतयोश्चस्य कच्वद्भा स्यात् । अववेष्टत् । अविवेष्टत् । अचचेष्टत् । अचिचेष्टत् ।

* गणश्चेः ॥२१५॥गणयतेश्चस्य कचि वा ईर्भवति । अजीगणत् । अजगणत् । चकारादचीकथत् ।

इति जैनेंद्रव्याकरणे शब्दार्णवचंद्रिकायां
वृत्तौ पंचमस्याध्यायस्य
द्वितीयः पादः ॥२॥

## तृतीयः पादः ।

सर्वस्य द्वे॥१॥ सर्व्वस्येति द्वे इति च एतद् द्वितयमधिकृतं वेदितव्यं । के द्वे ये शब्दतोऽर्थतश्चांतरतमे । वक्ष्यति-वीप्सायामिति-ग्रामो ग्रामो रमणीयः ।

परो त्रिः॥२॥प्रकृतयोर्द्विरुक्तयोःपरोऽवयवो त्रिसंज्ञो भवति । ...णवका३ माणवक । माणवक माणवक इदानीं ज्ञास्यसि जाल्म । त्रिप्रदेशाःन त्रेरित्यादयः ।

*प्राग्भृशाऽभीक्ष्ण्याविच्छेदे ॥ ३ ॥ भृशादिष्वर्थेषु वर्तमानस्य पदस्य वाक्यस्य वा द्वे रूपे भवतः प्रागेव तरतमाद्युत्पत्तेः । लुनीहि लुनीहि इत्येवायं लुनाति । अधीष्वाधीष्वेत्येवाऽयमधीते । भुक्त्वा भुक्त्वा व्रजति, भोजं भोजं व्रजति । चरति चरति ब्रह्मचर्य्यं। प्रागिति किं ? पठति पठतितरां । एप्विति किम् ? लुनीहि ।

+ नानैवार्थाभिव्याप्त्यानुपूर्व्ये ॥ ४ ॥ नानैवार्थे आभिव्ये आनुपूर्व्ये चार्थे द्वे स्तः । अस्मात्कार्षापणादिह भवद्भ्यां माषं माषं देहि । नानेति किं ? इह भवद्भ्यां माषं देहि । एवार्थ इति किं?एकं द्वौ त्रीन् वा माषान्देहि । नमो नमः । कन्या कन्या दर्शनीया । ज्येष्ठं ज्येष्ठं प्रवेशय । मूले मूले स्थूलाः । अग्रे अग्रे सूक्ष्माः ।

+ चापले ॥ ५ ॥ चापलेऽर्थे द्वे भवतः। अहिरहिः । बुध्यस्व बुध्यस्व । हस्त्यागच्छति हस्त्यागच्छति। लघु पलायध्वं लघु पलायध्वं । पृथग्योगात् त्रिरपि प्रयोगः । अहिरहिरहि ।

+ डतरडतमयोः समानां स्त्रीभावे ॥ ६ ॥ समानां समत्वेन विचार्य्यमाणानां डतरडतमांतस्य द्वे स्तः स्त्रीलिंगे भावे । उभाविमावाढ्यौ कतरा कतरा अनयोराढ्यता । कतमा कतमा अनयोराढ्यता । डतरडतमयोरिति किं ? उभाविमावाढ्यौ कानयोराढ्यता । समानामिति किं ? आढ्योऽयं कतरास्याढ्यता । स्त्रीति किं ? उभाविमावाढ्यौ कतरोऽनयोर्विभवः । भाव इति किं?द्वौ इमौ लक्ष्मीवंतौ । कतराऽनयोर्लक्ष्मीः ।

* पूर्व्वप्रथमस्याऽन्यातिशये ॥ ७ ॥ पूर्वप्रथमयोर्द्वे भवतःअन्यस्मादतिशयार्थे । पूर्व्वं पूर्वं पुष्यति । प्रथमं प्रथमं पच्यंते । अन्यग्रहणं किं? पूर्वतरं पुष्यंति । प्रथमतरं पच्यंते ।

× प्रो पोत्समोऽङ्घ्रिपूर्तौ ॥ ८ ॥ एषां द्वे स्तः अंघ्रिपूर्त्यर्थे ।

प्रप्रणम्य जिनं भव्यः संसंश्रित्य तपः परम् ।
उपोपपद्यते श्रेय उदुत्पन्नमहोदयः ॥

*सामीप्येऽधोऽध्युपरि ॥ ९ ॥ एषां द्वे स्तः सामीप्येऽर्थे । अधोऽधो नरकाणि।अध्यधि छत्राणि। उपर्य्युपरि स्वर्गपटलानि । सामीप्य इति

किं ? उपरि चन्द्रमाः ।

* वाक्यादेर्बोध्यस्य कोपाऽसूयाऽसंमतौ ॥ १० ॥ वाक्यादेर्बोध्यस्य द्वे स्तःकोपाद्यर्थेषु । माणवका३ माणवक । अविनीतका३ अविनीतक इदानीं ज्ञास्यसि जाल्म । माणवका ३ माणवक । वाक्यादेरिति किं ? शोभनः खल्वसि माणवक । बोध्यस्येति किं?उदारो देवदत्तो ददाति साधुभ्यः । कोपादिष्विति किं?देवदत्त गामभ्याज शुक्लां दंडेन ।

*वीप्सायां ॥ ११ ॥ वीप्सार्थे द्वे भवतः । वृक्षं वृक्षं सिंचति।कूपे कूपे जलं।देशे देशे सुभिक्षः।

एको बवत् ॥ १२ ॥ एकशब्दः वीप्सायां द्विरुक्तो बसवद्भवति । सुबुपपुंवत्भावौ प्रयोजनं । एकैको भुंक्ते । एकैका याति ।

×द्वंद्वं वा ॥ १३ ॥ वीप्सार्थे द्विशब्दस्य सुबंतस्य द्वंद्वं वा निपात्यते । द्वंद्वं तिष्ठतः । द्वौ द्वौ तिष्ठतः । द्वंद्वं कृतं । द्वाभ्यां द्वाभ्यां कृतं ।

* रहस्यमर्यादोक्तिव्युत्क्रांतियज्ञपात्रप्रयोगे ॥ १४ ॥ रहस्याद्यर्थेषु सुबंतस्य द्विशब्दस्य नित्यं द्वंद्वमिति निपात्यते । द्वंद्वं मंत्रयते । आसमनरकादधोऽधो द्वंद्वं नरकपटलानि हीनानि । द्वंद्वं व्युत्क्रांताः।पृथगवस्थिता इत्यर्थः । द्वंद्वं यज्ञपात्राणि प्रयुनक्ति ।

+ ख्यातेऽभिव्यक्ते ॥ १५ ॥ ख्यातेऽभिव्यक्ते अत्यंतसाहचर्य्येऽर्थे द्वंद्वं निपात्यते । द्वंद्वं नारदपर्व्वतौ । द्वंद्वं रामलक्ष्मणौ । ख्यात इति किं? द्वौ जिनदत्तगुरुदत्तौ । अभिव्यक्त इति किं ? द्वौ युधिष्ठिरार्जुनौ ।

* आबाधे ॥ १६ ॥ आबाधे पीडायां द्वे भवतः । बवच्च कार्यं । गतगतः । नष्टनष्टः । पतितपतितः । गतगता । नष्टनष्टा ।

* बवत् ॥१७॥ उत्तरे द्वित्वे बसस्येव कार्य्यं भवति । इत्येषोऽधिकारो ज्ञेयः।तत्रैवोदाहरिष्यामः।

प्रकारे गुणोक्तेर्वा ॥१८॥ प्रकारेऽर्थे गुणोक्तेर्द्वेवा स्तः बवच्च कार्यं । पटुप्रकारः पटुपटुः । पटुपट्वी । मृदुमृदुः । मृदुमद्वी। कालककालिका। पंडितपंडितः । प्रकार इति किं ? शुक्लः । गुणोक्तेरिति किं ? गौर्वाहीकः । बाग्रहणात्पटुजातीयः । मृदुजातीयः ।

प्रियसुखस्याऽकृच्छ्रे ॥ १९ ॥ प्रियसुखयोरकृच्छ्रेऽर्थे वा द्वे स्तः । प्रियप्रियेण ददाति । प्रियेण ददाति । सुखसुखेन,सुखेनाधीते जैनेंद्रं । अकृच्छ्र इति किं ? प्रियः पुत्रः । सुखो रथः । सर्व्वे यांतु यथायथमिति झिसंज्ञकं यथास्वमित्यस्मिन्नर्थे ।

परेर्वर्जने ॥ २० ॥ परेर्वा द्वे भवतः वर्जनेऽर्थे । परिपरि त्रिगर्तेभ्यो वृष्टो देवः । परित्रिगर्तेभ्यो वृष्टो देवः।वर्जन इति किं?ओदनं परिषिंचेति।

पदस्य ॥ २१ ॥ पदस्येत्ययमधिकारो वेदितव्यः आशास्त्रपरिसमाप्तेः । तत्रैवोदाहरिष्यामः ।

वाक्यस्य ॥ २२ ॥ अयमप्यासिद्धाधिकारात् ज्ञातव्यः वक्ष्यति-एकस्य तेमे" धर्मस्तेदीयते । धर्मो मे दीयते । वाक्यस्येति किं?ओदनं पच । तव भविष्यति मम भविष्यति ।

पदादऽपादादौ ॥ २३ ॥ पदादित्यपादादाविति च द्वयमधिकृतं वेदितव्यं । वक्ष्यति— वहोर्वस्नस् । धर्मो वो रक्षतु । पदादिति किं ? युष्मान् धर्मो रक्षतु । अपादादाविति किं ? शांतिनाथो जिनः सोऽस्तु युष्माकमघशांतये । येन संसारतो भीतिरस्माकमिह नाशिता ।

युष्मदस्मदोऽविभास्थस्य वाम्नौ ॥ २४ ॥ वाक्यावयवात्पदात्परयोरपादादौ वर्तमानयोः युष्मदस्मदोः अप् इप् ता इत्येतासु स्थितयोः वाम्नौ इत्येतावादेशौ भवतः । ज्ञानं वां दीयते । शीलं नौ दीयते । ज्ञानं वां रक्षतु । शीलं नौ रक्षतु । ज्ञानं वां स्वं । शीलं नौ स्वं ।

अविसाथस्येति किं ? दानं युवाभ्यां कृतं । आवाभ्यां कृतं । स्वमहणं श्रूयमाणविभक्त्यर्थं इह मा भूत् । इति युष्मदुपाध्यायो ब्रूते इत्यस्मदुपाध्यायो ब्रूते ॥

बहोर्वस्नस् ॥ २५ ॥ अविसाबहुंतयोःतयोर्वस्नसौ स्तः।ज्ञानं वो दीयते । शीलं नो दीयते । ज्ञानं वो रक्षतु । शीलं नो रक्षतु । ज्ञानं वः स्वं । शीलं नः स्वं ।

एकस्य तेमे ॥ २६ ॥ असैकांतयोस्तयोस्ते मे इत्येतावादेशौ भवतः । ज्ञानं ते दीयते । शीलं मे दीयते । ज्ञानं ते स्वं । शीलं मे स्वं ।

त्वामेपः ॥ २७ ॥ इबेकांतयोस्तयोः त्वा मा भवतः । मल्लिनाथस्त्वा रक्षतु । मुनिसुव्रतो मा रक्षतु ॥

न चवाहाऽहैवयोगे ॥ २८ ॥ चादिभिर्योगे तयोः वाम्नावादयो न भवंति । ज्ञानं तुभ्यं च दीयते । मह्यं च दीयते । युवाभ्यां च दीयते । आवाभ्यां च दीयते । युष्मभ्यं च दीयते । अस्मभ्यं च दीयते । ज्ञानं त्वां च पातु । मां च पातु । युवां च पातु । आवां च पातु । युष्मांश्च पातु । अस्मांश्च पातु । ज्ञानं तव च स्वं । ज्ञानं मम च स्वं । युवयोश्च स्वं । आवयोश्च स्वं । युष्माकं च स्वं । अस्माकं च स्वं । ज्ञानं तुभ्यं वा दीयते । मह्यं वा दीयते । तुभ्यं ह दीयते । मह्यं ह दीयते । तुभ्यमह दीयते । मह्यमह दीयते । तुभ्यमेव दीयते । मह्यमेव दीयते । योगग्रहणं किं ? ज्ञानं च वःस्वं। शीलं च वः स्वं ।

दृश्यऽर्थैश्चितायां ॥ २९ ॥ दृश्यर्थैर्धुभिश्चितायां वर्तमानैर्योगे तयोर्यदुक्तं तन्न भवति । ज्ञानं तुभ्यं दीयमानं संदृश्यागतो जनः । मह्यं दीयमानं संदृश्यागतो जनः । जनः त्वां समीक्ष्यागतः । मां समीक्ष्यागतः । जनस्तव कार्यमालोचयति । मम कार्य्यमालोचयति । दृश्यर्थैरिति किं ? जनो वो मन्यते । चिंतायामिति किं ? जनो नः पश्यति ।

वाऽनन्वादेशे ॥ ३० ॥ तयोर्वाम्नावादयो वा भवंत्यनन्वादेशे । धनं वां दीयते, युवाभ्यां दीयते । ज्ञानं नौ दीयते, आवाभ्यां दीयते । धर्मो वां पातु, युवां पातु । जिनो नौ पातु, आवां पातु । धर्मो वां स्वं, युवयोः स्वं । धर्मो नौ स्वं, आवयोः स्वं । धर्मो वो दीयते । युष्मभ्यं दीयते । नो, अस्मभ्यं दीयते । धनं ते दीयते, तुभ्यं दीयते । मे दीयते, मह्यं दीयते । जिनस्त्वा पातु, त्वां पातु । मा पातु, मां पातु।अनन्वादेश इति किं ? यूयं विनीतास्तद्वो गुरवो मानयंति । वयं शीलवंतः तन्नो गुरवो मानयंति । पूर्वं विनीतादिमादिश्य पश्चादिदमादिश्यते इत्यन्वादेशोऽयं।

*पदाद्वायाः॥३१॥पदात्परं यद्वांतं तस्मात् परयोर्वाम्नावादयो वा भवंति । विनीतस्त्वं आचार्य्येण ज्ञानं ते दीयते, तुभ्यं दीयते । मे दीयते, मह्यं दीयते । एवं सर्व्वत्र ।

*बोध्यं प्राग्नेव ॥ ३२ ॥बोध्यांतं पदं ताभ्यां पूर्वं नेव—नास्तीव भवति । देवदत्त तुभ्यं दीयते। मह्यं दीयते । त्वां रक्षतु । मां रक्षतु।बोध्यमिति किं ? जिनो वां पातु । प्रागिति।किं ? मयैतत्सर्व्वमाख्यातं युष्माकं मुनिपुंगवाः ।

*नैकार्थे बोध्ये जातिः॥ ३३ ॥ एकार्थे बोध्यांते परे जातिःसामान्यवचनं बोध्यांतं नास्तीव न भवति । क्षत्रिय श्रेणिक त्वार्हन् पातु । आशीर्दीयते ते आयुर्वर्द्धतां । एकार्थ इति किं ? क्षत्रिय ब्राह्मण युवां धर्मो दीयते । बोध्ये इति किं ? क्षत्रिय धनवान् मे स्वं देहि । जातिरिति किं ? श्रेणिक क्षत्रिय तुभ्यं धर्मो दीयते ।

*वा बहौ ॥ ३४ ॥ एकार्थे बोध्ये बहौ वि-

शेषवचने आविः सोऽस्तीता ममेव वा भवति। देवाःशरण्याः सो दीयते, युष्मभ्यं दीयते। नो दीयते। अस्मभ्यं दीयते। वेचाः शरण्याः के भवंतु, तव भवंतु। मे भवंतु, मम भवंतु।

पूर्वत्राऽसिद्धं ॥ ३५ ॥ पूर्वत्रेति च असिद्धमिति च एतत् द्वितयमधिकृतं ज्ञातव्यं आपादपरिसमाप्तेः। पूर्वस्मिन् शास्त्रे सार्द्धत्रि-पादचतुरध्याये कर्त्तव्ये परं शास्त्रं सार्द्धपादम-सिद्धं भवति। इत उत्तरं च पूर्वस्मिन् योगे कर्त्तव्ये परः परो योगोऽसिद्धो भवति। त आहुः। द्वा इमौ। मत्वस्याऽसिद्धत्त्वात् दी-एपौ न स्तः। अमुष्मै। अमुष्मात्। उत्वस्या-सिद्धत्वात् स्मायादयो भवंति। पचन्। नखे तत्वमसिद्धं।

शुष्किका मत्सुशर्मोणः क्षामिमानौजढत्सुगीः। पक्माक्षीण्वु गोलिण्मान् कुर्वति पिपठीः सुमुत्।

नत्वं सुब्विधिकृत्तुकि ॥ ३६ ॥ सुपः सुपि च विधि कृति तुकं च प्रति नत्वमसिद्धं भवति। राजभिः। राजभ्यां। राजभ्यः। ऐस्दीः एश्च न भवति। वृत्रहभ्यां।वृत्रहभिः।नत्वाऽसि-द्धत्वाचुन्न भवति। सुब्विधिकृत्तुकीति किं? राजी-यति। वृत्रहच्छत्रं। नियमोऽयं—एतयोरेव नत्वम-सिद्धं नान्यत्र। हस्त्यश्वं। राजावला।

न मु टाविधौ ॥ ३७ ॥ टास्थाने टानिमित्ते च विधौ कर्तव्ये मुभावोऽसिद्धो न स्यात्। अमुना मुत्त्वस्य सिद्धत्वात् सुलक्षणो नाभावः सुप्यदीत्वं च सिद्धं।

+ तादेशस्त्यषे ॥ ३८ ॥ त्यविधौ षत्वविधौ च कर्तव्ये तसंज्ञकादेशोऽसिद्धो न भवति। क्षीवेण तरति—क्षीविकः। वृक्णः। वृक्णवान्। त्यष इति किं? लग्नः। लग्नवान्।

+ षो ङुक्तुकोः ॥ ३९ ॥ रेफत्वे ङे तुकि च कर्तव्ये षविधिरसिद्धो न भवति। सुतषा ३ अत्र। अम्मा ३ अत्रं।

+ ष्वो नुस्वारे ॥ ४० ॥ ष्वविधिरनुस्वारे कर्तव्ये आसिद्धो न भवति। नृष्णाहि।

+ षतुक्तुद्वित्वे ॥ ४१ ॥ षत्वं तुकत्तुत्वं च द्वित्वे सिद्धं न भवति। विषुषुप्सुःउचिच्छिषति।

+ढादिर्द्वित्वे ॥ ४२ ॥ ढत्वादयो द्वित्वे कर्तव्ये सिद्धा न भवंति। द्रोढा। द्रोढा। द्रोग्धा द्रोग्धा। गलो गलः। गरो गरः।

* नो मृदंते खं ॥४३॥ मृदोऽन्ते वर्त्तमानस्य न-कारस्य खं भवति। राजा। राजभ्यां। राजत्वं। राजता। राजतरः। राजतमः। मृदंत इति किं? देवान्वंदेरन्। नडाभ्यां। बनाभ्यां। पदस्येति किं? राजानौ। राजनः।

न कौ ॥ ४४ ॥ पदांतस्य नकारस्य खं न स्यात् कौ परे। हे राजन्। हे तक्षन्।

नपि वा ॥ ४५ ॥ नपुंसके नखं न स्याद्वा कौ परतः। हेचर्मन्। हे चर्म।

ममोङ्झयो मतोर्वोऽयवादिभ्यः ॥ ४६ ॥ मकारांतादवर्णांतान्मकारोङोऽवर्णोङः झयंताच्चो-त्तरस्य मतोर्वत्वं स्यात् यवादीन्विहाय। किम्वान्। इदम्वान्। शीलवान्। गुणवान्। विद्यावान्। लक्ष्मीवान्। यशस्वान्। भास्वान्। उदश्वित्वान्। ममोङ्झय इति किं? धीमान्।अयवादिभ्य इति किं? यवमान्। उर्मिमान्। भूमिमान्। चारुमतीत्यादि।

खौ ॥ ४७ ॥ खुविषये मतोर्वो भवति। कपीवती। ऋषीवती। अहीवती।

चर्मण्वत्यष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वत् ॥ ४८ ॥ एते निपात्यंते खौ। चर्मण्वती नदी। नकारस्य खा-पवादो णत्वं निपात्यते। अष्ठीवान् जंघोरुसंधिः। आस्थिशब्दस्य अष्ठीभावो निपात्यः। चक्रीवान् राजगर्दभार्थे चक्रस्य चक्रीभावो निपात्यते। कक्षी-

वान्। कषिहस्त्यर्थे कषायशब्दस्य कषीभावः। रुमण्वान्। मंत्रिपर्वताऽर्थे लवणस्य रुमण्भावः। ख्याविति किं? चर्मवती। अस्थिमान्। चक्रवान्। कषायवान्। लवणवान्।

* अख्यौ चोदन्वान् ॥४९॥ अख्यौ ख्यौ च उदकस्य उदन्मतौ निपात्यः। उदन्वान् घटो मेघश्च। उदन्वान् समुद्रः ऋषिः, आश्रयश्च। उदकवानन्यत्र।

राजन्वान्सौराज्ये ॥५०॥ सौराज्येऽर्थे राजन्वानिति निपात्यते। राजन्वान् देशः। राजन्वती पृथ्वी। सौराज्य इति किं? राजवान् देशः।

कृपो रो लोऽकृपादीनां॥५१॥ कृपेः रेफस्य लत्वं भवति कृपादींस्त्यक्त्वा। कल्पते। क्लृप्तः। क्लृप्तवान्। क्लृप्यते। कल्पकः। अकृपादीनामिति किं? कृपा। कृपणः। कृपाणः। कृपटिः। कर्पूरः। कर्प्पटः। कर्परः।

गे रयौ ॥५२॥ गेः रेफस्य लादेशो भवत्यऽयतौ परतः। प्लायते। पलायते। अयाविति किं? प्रायः।

× निर्दुःप्रतेर्वा ॥५३॥ एषां रेफस्याऽयो लो वा भवति। निलयते। निरयते। दुर्लयते। दुरयते। प्लत्ययते। प्रत्ययते।

परेर्घाकयोगे ॥५४॥ परेः रेफस्य लो वा वा भवति घादौ परे। पलिघः। परिघः। पल्यंकः। पर्यंकः। पलियोगः। परियोगः।

+ ऋफिडादीनां॥५५॥ऋफिडादीनां रेफस्य ऋकारस्य च लो वा स्यात्। लफिडः। ऋफिडः। लोमानि। रोमाणि। कल्मं। कर्म। अलं। अरं। ऋफिलः। ऋफिडः। चूडा। चूला। गुलं। गुडं। पीला। पीडा। जलं। जडं।

* ग्रोऽचि ॥५६॥ गिरतेः रेफस्य लो वा भवत्यजादौ परतः। निगलति। निगिरति। गालकः। गारकः। गलनं। गरणं। अचीति किं? गीर्णं।

* यङि ॥५७॥ ग्रो रेफस्य यङि लो भवति। निजेगिल्यते। निजेगिल्येते। निजेगिल्यंते।

* बहुलं विभाऽध्यंगे ॥५८॥ बहुलं विभाऽध्यंगे प्राण्यंगे च अकारस्य लत्वे निपात्येते। गरो विषं। गलः कंठः।

स्फांतस्य सं ॥५९॥ स्फसंज्ञकांतस्य सं भवति। भवान्। विद्वान्। श्रेयान्। पुंस्यां। पदस्येति किं? भवंतौ।

रात् सः ॥६०॥ रेफादुत्तरस्य सकारस्य सं भवति। कटचिकीः। जिहीः। मातुः। नियमार्थोऽयं योगः। रेफात्सस्यैव सं नान्यस्य। ऊर्क्। न्यमार्ट्।

धि वा ॥६१॥ धकारादौ परतः ससंवा स्यात्। आध्वं। आद्ध्वं। आशाध्वं। आशाद्ध्वं। चकाधि। चकाद्धि।

झलो झलि ॥६२॥ झलः परस्य सकारस्य झलि परे सं भवति। अभैत्तां। अभित्त। अभित्थाः। अछित्त। अछित्थाः। झल इति किं? अमंस्त। झलीति किं? अभैत्सं।

प्राद्गोः ॥६३॥ प्रांताद् गोः परस्य सकारस्य सं स्यात् झलि परे। अकृत। अकृथाः। प्रादिति किं? अप्तोष्ट। अच्योष्ट। गोरिति किं? अलाविष्टां।

स्काद्यैः स्कोऽन्ते च ॥६४॥ सकारककारयोः स्कादौ वर्तमानयोः सं भवति झलि पदांते च। लग्नः। लग्नवान्। साधुलक्। तट्। तष्टवान्। काष्ठतट्। आवष्ट। स्कादेरिति किं? न्यस्तः। शक्तः। अंते चेति किं? लज्जिता। तक्षिता।

चोः कुः ॥६५॥ चवर्गस्य कवर्गादेशो भवति झल्यंते च। वक्ष्यति। वक्ता। वाक्। पक्ता। पक्तुं। पक्तव्यं। ओदनपक्।

हो ढः ॥६६॥ हकारस्य ढकारादेशो भवति।

झल्यंते च । लेढा । लेढुं । लेढव्यं । गुडलिट् । वोढा । गुणवट् ।

दादेर्घः ॥ ६७ ॥ दकारादेर्धो हस्य घकारादेशो भवति झल्यंते च । दग्धा । दग्धुं । दग्धव्यं । कर्मधनधक् । दादेरिति किं ? परीषहसट् । घोरिति किं ? दामलिट् ।

वा द्रुहमुहष्णुहष्णिहां ॥ ६८ ॥ एषां हकारस्य घो वा स्यात् झल्यंते च । द्रोग्धा । द्रोग्धुं । द्रोग्धव्यं । ध्रुक् । द्रोढा । द्रोढुं । द्रोढव्यं । ध्रुट् । मोग्धा । मुक् । मोढा । मुट् । स्नोग्धव्यं । स्नुक् । स्नोढव्यं । स्नुट् । स्नेग्धा । स्निक् । स्नेढा । स्निट् ।

नहो धः ॥ ६९ ॥ नहेर्हस्य धादेशो भवति झल्यंऽते च । संनद्धः । संनद्धवान् । नद्धा । नद्धुं । नद्धव्यं । परीणत् ।

आहस्थः ॥७० ॥ आहो हस्य थो भवति झलि । सत्यमात्थ त्वं ।

व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ॥ ७१ ॥ व्रश्चादीनां छकारशकारयोश्च झल्यंते च षो भवति । व्रष्टा । वृष्टुं । व्रष्टव्यं । कर्मवृट् । भ्रष्टा । भ्रष्टुं । भ्रष्टव्यं । धानाभृट् । स्रष्टा । स्रष्टुं । स्रष्टव्यं । तीर्थसृट् । मार्ष्टा । मार्ष्टुं । मार्ष्टव्यं । कर्मसृट् । यष्टा । यष्टुं।यष्टव्यं । देवेट् । राष्टिः । सुराट् । भ्राष्टिः । विभ्राट् । प्रष्टा । प्रष्टुं । प्रष्टव्यं । धर्मप्राट् । वेष्टा । वेष्टुं । वेष्टव्यं । विट् ।

+परिव्राट् ॥७२॥ परेर्व्रजेर्डत्वं निपात्यते पदांते ।

एकाचो बशो भष् झषः स्ध्वोः ॥ ७३ ॥ धोरेकाचो झषंतस्य योऽवयवो बश् तस्य भष् स्यात्, सकारे ध्वे च पदांते च । धोक्ष्यते । अधुग्ध्वं।धर्मधुत् । बोध्स्यते।अबुद्ध्वं । मंत्रभुद् । बोक्ष्यते । अधुग्ध्वं । गोधुक् । एकाच इति किं ? दामलिह्यतीति क्विप्-दामलिट् । बश इति किं ? क्रोत्स्यति । झष इति किं ? दास्यसि । स्ध्वोरिति किं ? बोद्धा ।

धः ॥ ७४ ॥ दधातेर्झषंतस्य बशो भष् स्यात् झलि परतः । धत्से । धत्त । धत्ते । धत्थः ।

+यङोऽन्येषां ॥७५॥ दधातेर्यङ्लुबंतस्य बशो भष् भवति झल्यन्येषामाचार्याणां मतेन । धात्तः । धात्थः । दात्तः । दात्थः ।

*धेस्तथोः ॥ ७६॥ धेटो यङ्लुबंतात्परयोस्तथोरेकेषां मतेन भष्स्यात् । दाद्धः । दाद्धः । दात्तः । दात्थः ।

* अधः ॥ ७७ ।अदधातेः झषंतात्तथोर्भष् स्यात् । लब्धा । लब्धुं । लब्धव्यं । अलब्ध । अलब्धाः । दोग्धा । दोग्धुं । दोग्धव्यं । अध इति किं ? धत्तः । धत्थः ।

झलो जश् ॥ ७८ ॥ झलः पदांते वर्तमानस्य जश् भवति । सुवागाचार्य्यः । तत्वविद्याति । अजत्र । त्रिष्टुब् ।

षढोः कः सि ॥ ७९ ॥ षकारढकारयोः ककारादेशो भवति सकारादौ परतः । पक्ष्यति । तोक्ष्यति । लेक्ष्यति । वक्ष्यति । सीति किं?द्वेष्टि।

*द्राद्यस्य तो नोऽमत्त्वमूर्छ्ो ॥ ८० ॥ दकाररेफाभ्यां परस्य तसंज्ञकस्य तकारस्य नत्वं भवति दस्य च पूर्वस्य-मदादींस्त्यक्त्वा । भिन्नः । भिन्नवान् । छिन्नः । छिन्नवान् । गूर्णः । गूर्णवान् । चॄ आचरणे । चीर्ण्णः । चीर्ण्णवान् । द्रादिति किं ? भुक्तः । भुक्तवान् । तस्येति किं ? भित्तिः । अमत्त्वमूर्छामिति किं ? मत्तः । मत्तवान् । पूर्त्तः । पूर्त्तवान् । मूर्त्तः । मूर्त्तवान् ।

स्फादेरोता धोर्यण्वतोऽध्याख्यः ॥ ८१ ॥ स्फादेर्ध्याख्यावर्जितादाकारांताद्धोर्यण्वतः परस्य तसकारस्य नो-भवति । संस्त्यानः । संस्त्यानवान् । निद्राणः । निद्राणवान् । ग्लानः ।

ख्यातवान् । स्फायेरिति किं ? स्फातः । स्फातवान् । आत इति किं ? च्युतः । च्युतवान् । येरिति किं ? निर्यातः । अण्वतः इति किं ? प्यातः । अयास्य इति किं ? ध्यातः । ध्यातवान् । ख्यातः । ख्यातवान् ।

ल्वादेः ॥ ८२ ॥ ल्वादिभ्यः तस्य नकारादेशो भवति । लूनः । लूनवान् । जीनः । जीनवान् । धूनः । क्लीनः ।

ऋतश्च क्तेः ॥ ८३ ॥ ऋकारांतेभ्यो ल्वादिभ्यश्च क्तेस्तकारस्य नो भवति । कीर्णिः । धूनिः । लूनिः ।

ओदितः ॥ ८४ ॥ ओकारेतस्तकारस्य नो भवति । पीनः । पीनवान् । भग्नः । भग्नवान् ।

* क्ष्यः ॥ ८५ ॥ कृतदीत्वात् क्षेस्तकारस्य नो भवति । क्षीणः । क्षीणवान् । दीत्वनिर्देशः किं ? क्षितोऽसि जाल्म ।

* त्राध्राघ्राह्रीनुदोंदविंत्तेर्वा ॥ ८६ ॥ एभ्यस्तत कारस्य नो वा स्यात् । त्राणः । त्रातः । त्राणवान् । त्रातवान् । ध्राणः । ध्रातः । ध्राणवान् । ध्रातवान् । घ्राणः । घ्रातः । घ्राणवान् । घ्रातवान् । ह्रीणः । ह्रीतः । नुन्नः । नुत्तः । समुन्नः । समुत्तः । विन्नः । वित्तः ।

श्यांचिदिवोऽस्पर्शापादानजये ॥ ८७ ॥ एभ्यः ततकारस्य नो भवत्यस्पर्शादौ । प्रतिशीनः । समक्नौ । शकुनेः पक्षौ । आद्यूनः । अस्पर्शादाविति किं ? शीतो वातः । उदक्तमुदकं कूपात् । द्यूतं वर्तते ।

प्वो नाशे ॥ ८८ ॥ पुनातेस्ततकारस्य नो भवति नाशेऽर्थे । पूना यवाः । नाशे इति किं ? पूतं धनं ।

सेः कर्मकर्तरि ग्रासे ॥ ८९ ॥ सिनोतेस्ततस्य नो भवति ग्रासे कर्मणि कर्तृत्वेन विवक्षिते । सिनो ग्रास स्वयमेव । कर्मकर्तरीति किं ? सितो गलो ग्रासेन । ग्रास इति किं ? सिता पाशेन शूकरी ।

निर्वाणोऽवाते ॥ ९० ॥ निस्पूर्वाद्वातेस्ततस्य नो निपात्यतेऽवातेऽर्थे । निर्वाणो मुनिः । अवात इति किं ? निर्वातो वातः ।

दुग्वो दीर्घ ॥ ९१ ॥ दुगुभ्यां ततकारस्य नो भवति तत्सन्नियोगे दीर्घ । दूनः । दूनवान् । गूनः । गूनवान् वत्सः ।

शुष्पचोः क्वौ ॥ ९२ ॥ आभ्यां ततकारस्य ककारवकारादेशौ स्तः । शुष्कः । शुष्कवान् । पक्वः । पक्ववान् ।

क्षो मः ॥ ९३ ॥ क्षायतेस्ततकारस्य मादेशो भवति । क्षामः । क्षामवान् ।

प्रस्त्यो वा ॥ ९४ ॥ प्रस्त्यायतेस्ततकारस्य मो वा स्यात् । प्रस्तीतः । प्रस्तीमः । प्रस्तीतवान्, प्रस्तीमवान् । प्रपूर्वः किं ? संस्त्यानवान् ।

फुल्लः ॥ ९५ ॥ फुलेर्विसरणार्थात्तस्य लो निपात्यते । फुल्लो वनस्पतिः ।

समुदः ॥ ९६ ॥ समुद्भ्यां परः फुल्लो निपात्यः । संफुल्लः । संफुल्लवान् । उत्फुल्लः । उत्फुल्लवान् । नियमार्थमिदं-समुद्भ्यामेव नान्यस्माद्धेः । प्रफुल्ता कता ।

क्षीवकृशोल्लाघाः ॥ ९७ ॥ क्षीवादीनां त शब्दस्य त्वं निपात्यं । क्षीवः । क्षीववान् । कृशः कृशवान् । उल्लाघः । उल्लाघवान् ।

*भित्तं शकलं ॥ ९८ ॥ भिदेः क्तस्य नत्वाभावो निपात्यः शकलार्थश्चेत् । भित्तं । दारुखंडमित्यर्थः । भिन्नमन्यत् ।

*वित्तं ख्यातार्थे ॥ ९९ ॥ लाभार्थाद्विदेःक्तस्य नत्वाभावो निपात्यः ख्यातपर्यायोऽर्थपर्यायो वा भवति चेत् । वित्तः विख्यातः । वित्तं धनं । विन्नमन्यत् ।

क्लिन्नस्य कुः ॥ १०० ॥ क्लिन्नो यस्य तस्य धोः

कुर्वा भवति। द्युवत्सृक्। तादृक्। अस्मादृक्। त्वमहमात्सहसदृगिति सिद्धं।

*अबोर्वा॥ १०१॥ नंबेः श्रोः पदस्य कुर्वा भवति। अविनक्। अविनट्।

ससजुषो रिः॥१०२॥ सकारस्य पदांतस्य सजुषश्च रिर्भवति। जिनः। संयतः। सजूः।

अहन्॥१०३॥ अहन्नित्यस्य पदस्य रिर्भवति। अहोभ्यां। अहोभिः। दीर्घाहाः कालः।

×रूपरात्रिरथांतरे॥ १०४॥ अहो रिर्भवति रूपादिषु परतः। अहोरूपं गतं। अहोरात्रिरागता। अहोरथांतरे। एष्विति किं? अहर्ददाति।

रोऽसुपि॥ १०५॥ अहो रेफादेशो भवति असुपि परे। अहः। अहरेति। अहर्गच्छति। असुपीति किं? अहोभ्यः।

+वाऽहर्प्पत्यादिषु॥१०६॥ अहरादीनां पत्यादिषु रो वा स्यात्। अहर्प्पति। अहःपतिः। गीर्पतिः। गीःपतिः। प्रचेता राजः। प्रचेतो राजः।

वसुसंसुध्वंस्वनडुहां दः॥ १०७॥ वस्वादीनां सकारहकारयोः दकारादेशो भवति। सुविद्वत्। सुविद्वद्भ्यां। उखास्रत्। पर्णध्वत्। उखास्रद्भ्यां। पर्णध्वद्भ्यां। स्वनडुत्। स्वनडुद्भ्यां। स्वनडुद्भिः। पदस्येति किं? विद्वस्यति।

तिपि धोः॥१०८॥ धोः सकारस्य तिपि दो भवति। अचकाद्भवात्। अन्वशाद्भवान्।

सिपि रिर्वा॥१०९॥ धोः सकारस्य वा रिर्भवति सिपि परतः। पक्षे दश्च। अचकास्त्वं, अचकास्त्वं। अन्वशास्त्वं, अन्वशास्त्वं।

दः॥११०॥ धोर्दकारस्य रिर्वा भवति सिपि। पक्षे दः। अभिनस्त्वं। आभिनस्त्वं।

मो नः॥ १११॥ धोर्मकारस्य नो भवति। प्रशान्। प्रतान्। प्रतान्भ्यां। प्रतान्। प्रतान्भ्यां।

म्वोः॥ ११२॥ धोर्मकारस्य नादेशो भवति मकारवकारयोः। जंगन्मि। जंगन्वः। जंगन्मः।

दी वोरिगुङ॥ ११३॥ रेफवकारांतस्य धोरिकः उङः दीर्भवति। गीः। धूः। पूः। आशीः। गीर्भ्यां। धूर्भ्यां। वोरिति किं? शुचिः।

हल्यभकुर्छुरः॥ ११४॥ हलि परे रेफवकारांतस्य भ कुर्छुर्वर्जितस्य धोरिगुङः दीर्भवति। गीर्णः। शीर्णः। विस्तीर्णः। दीव्यति। सीव्यति। अभकुर्छुर इति किं? धुर्यः। दिव्यः। कुर्यात्। छुर्यात्।

उङोः॥११५॥ उङ्भूतयो रेफवकारयोरिगुङः दीर्भवति। कूर्दते। तूर्वति। कीर्वति। प्रतिदीव्ना। प्रतिदीव्ने।

दावुदौ मोऽदसोऽसेः॥ ११६॥ अदसोऽसकारस्य दात्परस्य वर्णमात्रस्य उत्त्वं दस्य च मत्वं स्यात्। अमुं। अमी। अमून्। अमूभ्यां। असेरिति किं? अदस्यति। अदः कुलं।

×वाऽद्रेः॥ ११७॥ अद्र्यंतस्याऽदसो दात्परस्य वर्णमात्रस्योत्वं दस्य च मो वा भवति। अत्राचार्यमतभेदाः—

परतः केचिदिच्छंति केचिदिच्छंति पूर्वतः।
उभयोः केचिदिच्छंति केचिदिच्छंति नोभयोः॥

अदमुयङ्। अमुद्र्यङ्। अमुमुयङ्। अदद्र्यङ्।

बहुष्वेरीः॥ ११८॥ बहुषु वर्त्तमानस्याऽदसो दात्परस्यैकारस्य ईत्वं स्यात्। अमी। अमीभिः। अमीभ्यः। अमीषां। अमीषु। बहुष्विति किं? अमू कन्ये।

वाक्यटेः पः॥ ११९॥ वाक्यस्य टेः पो भवतीत्येषोऽधिकारो वेदितव्यः। दूराद्धूते। आगच्छ भोः जिनदत्त३। वाक्यग्रहणं किं? पदानां मा भूत्। टेरिति किं? अनंत्यस्याप्यचो मा भूत्। धर्मवी३त्।

* ओम् प्रत्यऽभिवादेऽशूद्रे वा ॥१२०॥ अशूद्रवर्जिते प्रत्यभिवादे वर्तमानस्य वाक्यस्य टेः पो वा स्यात् भोःशब्दस्य च । अभिवादये देवदत्तोऽहं भोः । आयुष्मानेधि देवदत्ता ३ । आयुष्मानेधि देवदत्त । अभिवादये देवदत्तोऽहं भोः । आयुष्मानेधि भोः ३ ॥ आयुष्मानेधि भोः । अस्त्रीशूद्र इति किं ? अभिवादये—गार्ग्यहं भोः । आयुष्मती भव गार्गि । अभिवादये तुषजकोऽहं भोः। कुशल्यसि तुषजक।

*दूराद्धूते ॥ १२१ ॥ दूरात् धूते—आहूयमाने वाक्यस्य टेः पो वा स्यात् । आगच्छ भो जिनदत्ता ३ ॥ पक्षे न भवति ।

हैहेष्वेषामेव ॥ १२२ ॥ हैहेयोः प्रयोगे तयोरेव पो वा भवति । है ३ देवदत्त आगच्छ।आगच्छ है ३ देवदत्त । है देवदत्त आगच्छ।आगच्छ है देवदत्त । हे ३ गुरुदत्त।हे ३ देवदत्त आगच्छ। आगच्छ हे३ गुरुदत्त। पक्षे—हे गुरुदत्त आगच्छ । गुरुदत्त आगच्छ हे ॥

* लनृतोऽनंत्यस्याऽप्येकस्य रोः ॥१२३॥ ऌकारस्य ऋद्वर्जितस्य च रोरनंत्यस्यांत्यस्यापि टेश्च एकस्य पो वा स्यात् । आगछ हे क्लृ ३ प्तशिख । आगछ हे क्लृप्तशिखा ३ । आगछ हे क्लृप्तशिख । दे३ वदत्त । देवदा ३ त। देवदत्ता ३ । पक्षे न भवति—देवदत्त । अनृत इति किं ? कृष्णमी ३ त्र । कृष्णमित्रा ३ । रोरिति किं ? देवदत्त । वकारात्परस्य मा भूत् । एकस्येति किं ? अनेकस्य रोः टिना च सहायौगपद्यार्थं ॥

* ओं प्रारंभे ॥ १२४ ॥ ओमित्येव प्रारंभे प्रणामाद्यभ्यादाने पो वा स्यात् । ओ३म् ऋषभं पवित्रं प्रणमत । पक्षे न।प्रारंभ इति किं ? ओं वदामि।

हैः पृष्टोक्तौ ॥ १२५ ॥ पृष्टोक्तौ प्रतिवचने हैः पो वा स्यात् । अलावीः केदारं देवदत्त ? अलाविषं ही ३ । अलाविषं हि।पृष्टोक्ताविति किं ? अकार्षं हि कटं देवदत्त ।

* चितीवे ॥ १२६ ॥ चिदित्येतस्मिन्निवार्थे प्रयुज्यमाने वाक्यस्य टेः पो वा स्यात् । राजा चिद् ब्रूया३त् पक्षे न । चितीति किं ? अग्निरिव भायात् । इव इति किं ? कथंचिदाह ।

* प्राचो विचारे ॥१२७॥ विचारे वर्तमानस्य प्राचः पूर्वस्य वाक्यस्य टेः पो वा भवति। अहिर्नु ३ रज्जुर्नु । अहिर्नु रज्जुर्नु । स्थाणुर्नु ३ पुरुषो नु । पक्षे न ।

* प्रतिश्रुतिषु ॥ १२८ ॥ प्रतिश्रवणादिषु वर्तमानस्य वाक्यस्य टेः पो वा भवति । गां मे देहि भोः। हंत ते दास्यामि ३।अनित्यः शब्दो भवितुमर्हति ३ । देवदत्त भोः किमात्थ ३ ।

पूजिते ॥ १२९ ॥ पूजितेऽर्थे टेः पो वा भवति । शोभनः खल्वसि देवदत्ता३ । पक्षे न ।

* कोपादौ प्रौ ॥१३०॥ कोपादिष्वर्थेषु टेर्वा पो भवति प्रौ परतः। माणवक३माणवक । अविनीतका ३ अविनीतक । इदानीं ज्ञास्यसि जाल्मेत्यादि । न च पक्षे ।

*भर्त्सेऽन्यतरस्य ॥१३१॥भर्त्सनेऽर्थेऽन्यतरस्यैकस्य वा पो भवति । चोरा३ चोर चोर बंधयिष्यमि त्वां । मारायिष्यामि त्वां ।

* मिङोऽपेक्षस्यांगेन ॥१३२॥ भर्त्सेऽर्थे मिङंतस्य वाक्यांतरपदाकांक्षस्य वा पो भवत्यंगशब्देन योगे । अंग कूजा ३ इदानीं ज्ञास्यसि जाल्म । पक्षे न । मिङ इति किं ? अंग देवदत्त मिथ्या वदसि । अंगेनेति किं ? देवदत्त कूज इदानीं ज्ञास्यसि जाल्म । भर्त्स इति किं?अंगाधीष्व मोदकं दास्यामि ।

*क्षयाशीःप्रैषे ॥१३३॥ एष्वर्थेषु मिङंतस्य वाक्यांतराकांक्षस्य टेः पो वा भवति । स्वयं ह्यो-

वर्म मुंक्के३ उपाध्यायं शक्तून् पाययति। पुत्रांश्च लप्सीष्ट ३ धर्मं चाकटं कुरु ३ ग्रामं च गच्छ ।पक्षे ना।

*प्रश्नोक्त्योः प्रतिपदं ॥१३४॥ प्रश्ने तदुक्तौ च प्रतिपदं टेः पो वा भवति। अगमा:३ पूर्वा३न् ग्रामा ३न् देवदत्ता ३। अगमा३म् जिन दत्ता ३। पक्षे न। प्रश्नोक्त्योरिति किं ? त्वं ग्रामं गच्छ।

*प्रश्नाऽर्चाविचारमत्यभिवादेष्वैचोऽतेऽदेरादिदुत्परः॥१३५॥ प्रश्नादिष्वर्थे वाक्यस्यांते वर्तमानस्यादिसंज्ञकस्य एचः आकारः पो भवन् इदुत्पर आकारः पो भवति। अदास्तसा३ इ। अदाः पटा३ उ। शोभनः खल्वसि आग्निभूता ३ इ। शोभनः खल्वसि। पटा३ उ अध्येतव्यं। गृहा ३इ उत वसतौ। आयुष्मंतौ स्तः पुत्रपुत्रा उ। प्रश्नादिष्विति किं?दस्यो३ घातयिष्यामि त्वां। एच इति किं ? भद्रकासि कुमारी३। अंत इति किं ? मद्रोऽसि गौः ३। अदेरिति किं ? अपाक्षा३म् ओदना३म् कन्ये३।

य्वऽचि संधौ ॥१३६॥ एचः स्थाने यौ इदुतौ तयोरिदुतोरचिपरे यकारवकारादेशौ स्तः संधिविवक्षायाम्। अग्ना३यिदं। पटा३वत्र। अचीति किं ? अग्ना३इ गतं। पटा३ उ गतं। संधाविति किं? अमा३इ इदं। संधावित्याधिकारश्चाचतुष्टयात्।

इति जैनेंद्रव्याकरणे शब्दार्णवचन्द्रिकायां वृत्तौ पंचमस्याध्यायस्य तृतीयः पादः।

## चतुर्थः पादः।

पुमः खय्यंऽपरे सीसुक् ॥१॥ पुम इत्येतस्य यदंत्यं पदांते वर्तमानस्य अम्परे खयि परतः सीरादेशः सुक्चागमः पर्यायेण भवतः। पुँस्कातं, पुंस्कातं। पुँस्कोकिलः। पुंस्कोकिलः। पुमांसं चालयतीति पुँश्चली। पुंश्चली। पुँस्पुत्रा। पुंस्पुत्रा।खयीति किं ? पुंगवः। पुंवागः। पुंदासः। अम्पर इति किं ? पुंक्षुरः।

नश्छव्यऽप्रशान् ॥२॥ नकारस्य पदांतस्याम्परे छवि सी सुकौ स्तः प्रशान्शब्दं विहाय। भवाँश्छादयति। भवाँष्ठकारीयति। भवाँस्थुडति। भवाँश्चरति। भवाँष्टीकते। भवाँस्तरति। छवीति किं ? भवान् करोति। अप्रशानिति किं ? प्रशान् चिनोति। अम्पर इति किं ? भवान्त्सरुकः।

+कांस्कान् ॥३॥कान्शब्दस्य कानि परे सी सुकौ निपात्यौ। कौंस्कान्। कांस्कान्पश्य।

+समः स्कृसि ॥४॥ समुद्कस्य कृञःसकारे परे समः सी सुकौ स्तः। सँस्कर्ता। संस्कर्ता। स्कृग्रहणं किं ? संस्मरति। सीति किं ? संचस्कार।

+नॄनः पि रीरुख्वा ॥ ५ ॥ नॄन्शब्दस्य पकारे परे रीरादेशः रुक्चागमः पर्यायेण स्तः। नॄँ:पाहि। नॄँःपाहि। नॄन्पाहि।

भगवद्भवत्वघवतो रिःकावऽवस्यौः ॥६॥ एषां कौ रिर्वा भवति तदैवाऽवशब्दस्य च ओत्वं। हे भगोः। हे भगवन्। हेभोः। हे भवन्। हे अघोः। हे अघवन्। काविति किं? हे भगवंतौ। हे भवंतौ। हे अघवंतौ।

*ओदाद्योऽशि॥७॥ प्रकृतात् ओकारादवर्णाच्च परस्य रेर्यो भवति—अशि परतः। भगोयत्र भोयत्र। कयास्ते। देवायासते। प्रकृतौकारःकिं? गोरत्र।अशीति किं?भोःखनसि।रेरिति किं?पुनरत्र।

+व्योऽस्पष्टः सं ॥८॥ ताभ्यां यकारवकारयोरस्पष्टः सं च भवत्यशि परतः। भोयत्र। भो अत्र। पटवु। पट उ। तवु। त उ। पदस्येति किं ? नयनं।

याऽनुस्वारात् ॥ ९ ॥ अवर्णांताद्वयोरस्वह: खं च वा भवत्युनूर्वोवेतऽशि परत: । पटविह । पट इह । पटविँह । तयाहु: । तआहु: । तयाँहु: । अनुणीति किं ? पटवु । पट उ । आविति किं ? अयोयँत्र । अयो अत्र ।

हलि ॥ १० ॥ य्वो: खं भवत्याशि हलि परत: । नित्यार्थमिदं । अगो देहि । देवा यांति । वृक्षहसति । आशि हलीति किं ? वृक्षव् करोति ।

मनुस्वोऽम् ॥ ११ ॥ नुक: मकारांतस्य च पदस्य अं इत्यनुस्वारो भवति हलि परे । यं-यम्यते । धर्मं शृणोति । पापं हंति । हलीति किं ? इदमत्र ।

नश्चाऽपदांते झलि ॥ १२ ॥ नकारस्य मकारस्य चापदांते वर्तमानस्य अं भवति झलि परत: । यशांसि । तेजांसि । पुंसि । अपदांत इति किं ? भगवान् शांत: । शलीति किं ? गम्य: ।

सम्राद् ॥ १३ ॥ समो मकारस्य मकार एव निपात्य: राजतौ क्व्यंते परत: । सम्राद् भरत: ।

ङ्ण: कुक् टुक् शरि वा ॥ १४ ॥ ङकारणकारयो: कुक् टुकौ वा स्त: शरि परे । प्राङ्छेते । प्राङ्क्छेते । प्राङ्शेते । सुपण्ट्छेते । सुपण्शेते । सुपण् शेते । शरीति किं ? प्राङ्करोति ।

नश्चि तुक् ॥ १५ ॥ पदांतस्य नकारस्य शकारे तुग्वा स्यात् । कुर्व्वञ्च्छेते । कुर्व्वञ्च्शेते कुर्व्वञ्शेते । शीति किं ? कुर्व्वन्षंढ: ।

ड्नाद् धुट् सोऽश्च: ॥ १६ ॥ डकारांतान्नकारां-ताच्च सकारस्य श्चोऽवयववर्जितस्य धुडागमो भवति । मधुलिड्त्सीदति । मधुलिड्सीदति । महा-न्त्साधु: । महान्साधु: । स इति किं ? मधुलिड् षंडे । अश्च इति किं ? अटश्चोतति ।

ङमो ङोऽच्युङम: ॥ १७ ॥ ह्रस्वात् परस्य ङम: ङो वा भवति अचि परे । क्षम्मत्र । क्षमु अत्र । किंन्वुष्णं । किमु उष्णं । तद्वस्य मतं । तदु अस्य मतं । मय इति किं ? स्वरु उपैति । अचीति किं ? क्षमु भवतु ।

ङ्णो ङ्मुट् तु यात् ॥ १८ ॥ ह्रस्वात्परो यो ङम् तदंतात्परस्याऽच: नित्यं ङ्मुट् भवति । कुङ्ङास्ते । सुगण्णिह । कुर्वन्नास्ते । प्रादिति किं ? प्राङास्ते । अचीति किं ? पठन् रमते ।

ढो ढि खं ॥ १९ ॥ ढकारस्य ढकारे परे खं भवति । गूढं । लीढं ।

रो रि ॥ २० ॥ रेफस्य रेफे परे खं भवति । अग्नीरथेन । पुनारमते ।

* अंतेऽ: ॥ २१ ॥ अंते वर्तमानस्य रेफस्य अ: इति विसर्जनीयो भवति । देव: । कवि: । प्रात: । अंत इति किं ? स्वरत्र ।

शर्परे खरि ॥ २२ ॥ रेफस्य विसर्गो भवति शर्परे खरि परत: । नर: त्सरुक: । पुरुष: त्सरति ।

कुप्वो: ॥ २३ ॥ खभूतयो: कवर्गपव-र्गयो शर्परे खरि परत: रेफस्य विसर्गो भवति । वास: क्षौमं । अद्भि: प्सातं ।

ᳵक ᳵपौ च ॥ २४ ॥ खरि स्थितयो: कुप्वो: परत: रेफस्य ᳵक ᳵप इत्येतावादेशौ भवत: विसर्गश्च । अंतᳵकरोति, अंत: करोति । कᳵख-नति । क: खनति । अंतᳵपचति । अंत: पचति । वृक्षᳵफलति । वृक्ष: फलति । कुप्वो-रिति किम् ? कश्चरति ।

शरि सश्च ॥ २५ ॥ रेफस्य सकारादेशो भवति विसर्गश्च शरि परत: । कश्शेते । क: शेते । कष्षंडे । क: षंडे । कस्सरति । क: सरति । अंतश्शोभते । अंत: शोभते । शरीति किं ? क: पठति ।

रेश्च सुपि ॥ २६ ॥ शरि सुपि रे: सो भवति विसर्गश्च । पयस्सु । पय:सु । नियमार्थोऽयं योग: । रेरिकारानुबंधस्यैव सुपि सत्वविसर्गौ

नान्यस्य । गीर्षु । धूर्षु ।

+ **खय्परे खं वा** ॥ २७ ॥ खय्परे शरि रेफस्य खं भवति वा। चेतस्खलति। चेतस्स्खलति। चेतः स्खलति । कस्कंदति । कस्स्कंदति । कः स्कंदति। खय्पर इति किं ? कः सरति। कस्सरति ।

**छवि** ॥ २८ ॥ रेफस्य सकारादेशो भवति छवि परतः। कश्छिनत्ति। कष्टकारः। कस्थुडति। कश्चरति । कष्टीकते । कस्तरति ।

**कुप्वोस्त्येऽञ्झेः सिः** ॥ २९ ॥ कवर्गपवर्गादौ त्ये परे झिवर्जितस्य रेफस्य सिर्भवति। काम्यकल्प रूपाशेषूदाहरणं । यशस्काम्यति । पयस्कल्पं । सर्पिष्कं। पयस्पाशं । त्य इति किं? पयः पिबति । अझेरिति किं ? मुहुः काम्यति ।

* **रेरेव काम्ये** ॥३०॥ रेरिकारानुबंधस्यैव काम्ये त्ये सिरादेशो भवति नान्यस्य । पयस्काम्यति। रेरिति किं ? धूः काम्यति ।

* **निर्दुर्बहिश्चतुराविःप्रादुसः** ॥ ३१ ॥ निरादीनां रेफस्य सिर्भवति कुप्वोःपरतः। निष्कृपः। निष्पेयं । दुष्कृतं । दुष्पीतं । बहिष्कुरु । बहिष्पिब । चतुष्कं । चतुष्पदी । आविष्कृत्य । आविष्पठ । प्रादुष्कुर्यात् । प्रादुष्पच ।

**नमःपुरसोस्त्योः** ॥३२॥ एतयोस्तिसंज्ञयोःरेफस्य सिर्भवतिः कुप्वोः परतः। नमस्कृत्य । नमस्कर्त्ता। नमस्कर्तुं। नमस्कर्तव्यम्। पुरस्कृत्य । पुरस्कर्ता। त्योरिति किं ? नमः कृत्वा । पुरः कृत्वा

**तिरसो वा** ॥ ३३ ॥ तिरसो रेफस्य सिर्वा भवति । तिरस्कृत्य । तिरः कृत्य । तिरस्कर्ता । तिरः कर्ता ।

**सुचः** ॥ ३४ ॥ सुजंतस्य रेफस्य सिर्वा स्यात् कुप्वोः परतः । द्विष्कुरु । द्वि ${}^{\asymp}$कुरु । द्विःकुरु । द्विष्पठ । द्वि ${}^{\asymp}$पठ । द्विःपठ । त्रिष्करोति । त्रि ${}^{\asymp}$करोति । त्रिः करोति । त्रिष्पचति । त्रि ${}^{\asymp}$पचति । त्रिः पचति । चतुष्करोति । चतु ${}^{\asymp}$करोति । चतुः करोति । चतुष्पठति । चतु ${}^{\asymp}$पठति । चतुः पठति ।

**इसुसोऽपेक्षायाम्** ॥ ३५ ॥ इसुसंतस्य रेफस्य सिर्वा स्यात् कुप्वोरन्योन्यापेक्षायाम् । सर्पिष्करोति । सर्पि ${}^{\asymp}$करोति । सर्पिः करोति । सर्पिष्पिबति । सर्पि ${}^{\asymp}$पिबति। सर्पिःपिबति । धनुष्खंडयति। धनु ${}^{\asymp}$खंडयति। धनुः खंडयति। धनुष्पाति। धनु ${}^{\asymp}$पाति । धनुः पाति । इसुस इति किं ? पय ${}^{\asymp}$कुरु । अपेक्षायामिति किं ? तिष्ठतु सर्पिः पिबस्त्वंभः ।

**नैकार्थेऽक्रिये** ॥ ३६ ॥ इसुसोरेफस्य सिर्न भवति क्रियापदहीनैकार्थपदस्थयोः कुप्वोरपेक्षायां। सर्पिः कालकं । यजुः पीतकं। एकार्थ इति किं ? सर्पिष्कुंभे । अक्रिय इति किं ? सर्पिष्क्रियते॥

**सेऽद्युस्थस्य** ॥ ३७ ॥ इसुसोः रेफस्याऽद्युस्थस्य से सिर्भवति कुप्वोः परतः । सार्पिष्कुंडं । सर्पिष्पानं । धनुष्खंडं । स इति किं ? आस्तां सर्पिःपिब क्षीरं। अद्युस्थस्येति किं?सत्सर्पिःकुंडे ।

**कृकमिकंसकुंभकुशाकर्णीपात्रेऽतोऽझेः** ॥३८॥ कृकम्यादिष्वतः परस्याझेः रेफस्य से अद्युस्थस्य सिर्भवति । अयस्कारः । अयस्कृत् । यशस्कामः । अयस्कंसः । अयस्कुंभः । अयस्कुशा । अयस्कर्णी । पयस्पात्रं । अत इति किं ? गीःकारः। धूःकारः । अझेरिति किं? स्वः कृत् । प्रातःकारः । अद्युस्थस्येति किं ? सुपयष्कारः ।

**शिरोऽधसोः पदे** ॥ ३९ ॥ अनयोरद्युस्थस्य रेफस्य पदे परतः से सिर्भवति । शिरस्पदं । अधस्पदं । स इति किं ? शिरसः पदं ।

* **कस्कादिषु** ॥ ४० ॥ एषु वर्त्तमानस्य रेफस्य सिर्भवति कुप्वोः परतः । कस्कः । कौतस्कुतः । भास्करः । अयस्पिंडः । इत्यादि ।

***किणोस्ससेः षः** ॥ ४१ ॥ कवर्गेण्भ्यां परस्य सकारस्य सेश्च षो भवति । इत्याधिकारो

क्षेयः । वक्ष्यति–स्यादेशयोः । वाक्षु । मुनिषु । सिषेव । सर्प्पिष्काम्यति । किणोरिति किं ? वास्यति।

नुम्शरः ॥ ४२ ॥ किण्भ्यां परो यो नुम् शर् च तस्मात्तस्योः षो भवति । सर्प्पीषि । धनूंषि । सर्प्पिःषु । धनुःषु ॥

स्यादेशयोः ॥ ४३ ॥ ताभ्यां स्यसकारस्य आदेशसकारस्य च षादेशो भवति । एषु । एषा । सुष्वाप । साधुषु । कर्तृषु । दिक्षु ।

शास्वसघसां ॥ ४४ ॥ किण्भ्यां परस्य एषां सकारस्य षो भवति । शिष्टः । शिष्टवान् । उष्यते । जक्षतुः ॥

षणि चाण्णिस्तोरेवास्वित्स्वत्सहः॥४५॥ षणि षत्वभूते सनि परे चात्परस्य सकारस्य षादेशो भवति ण्यंतानां स्तौतेश्च स्विदि स्वदि सहो विहाय । सिषेवयिषति । सुष्वापयिषति । तुष्टूषति । नियमोऽयं–णिस्तोरेव षणि षत्वं नान्यस्य । सुसूषति । सिसिक्षति । एवकारः इष्ट-नियमार्थः । णिस्तोः षण्येवेति माभूत् । असी-षिवत् । तुष्टाव । षणीति किं ? सिषेव । षत्वनि-र्देशः किं ? सिषासति । सुषुप्साति । नकारग्रहणं किं ? व्यातिसुषुपिषे । चादिति किं ? प्रतीषिषति । आस्वित्स्वत्सह इति किं ? सिस्वेदयिषति । सिस्वा-दयिषति । सिसाहयिषति ।

*संजेर्वा ॥ ४६ ॥ संजेर्ण्यंतस्य षणि चात्प-रस्य षो वा स्यात् । सिषंजयिषति । सिसंजयिषति।

गेः सूक्सुसोस्तुस्तुभोऽड्यऽपि ॥ ४७॥ गेरिण्णंतात्परेषां एषां सकारस्याटि सत्यऽसत्यपि षो भवति । परिषुणोति । विषुणोति । अभिषुणोति। पर्य्यषुणोत् । निषुवति । विषुवति । परिषुवति । न्यषुवत् । विष्यति । निष्यति । अभिष्यति । व्यष्यपत् । नमिनाथमभिष्टौमि । अभ्यष्टौत् । निष्टौति । विष्टौति । परिष्टौति । अभिष्टोभते । निष्टोभते । अधिष्टोभते । अध्यष्टोभत । गेरिति किं ? दधि सुनोति ।

* स्थासेनिसेधासिचसंजस्वंजोऽद् वेऽस्य च ॥ ४८ ॥ स्थादीनां गेः परेषामटि चे च सत्य-सत्यपि अस्य च चस्य षो भवति । अनुष्ठास्यति । निष्ठास्यति । विष्ठास्यति । अभिष्ठास्यति । परिष्ठास्यति । अन्वष्ठात् । अनुतष्ठौ । अभि-षेणयति । निषेणयति । परिषेणयति । अभ्य-षेणयत् । अभिषिषेणयिषति । निषेधति । विषे-धति । अभिषेधति । परिषेधति । न्यषेधत् । निषिषेध । विषिंचति । निषिंचति । परिषिंचति । अभिषिंचति । व्यषिंचत् । विषिषिक्षति । विष-जति । निषजति । परिषजति । अभिषजति । व्यषजत् । विषषंज । परिष्वजते । निष्वजते । विष्वजते । परिषिष्वंक्षते ।

सदोऽप्रतेः ॥ ४९ ॥ अप्रतेर्गेः परस्य सदेः षो भवति । निषीदति । विषीदति । परिषीदति। न्यषीदत् । निषीषद्यते । निषसाद । अभिषिष-त्सति । अप्रतेरिति किं ? प्रतिसीदति ।

स्तम्भे ॥५० ॥ गेःपरस्य स्तंभेःषो भवति । निष्टभ्नाति । प्रतिष्टभ्नाति । परिष्टभ्नाति । विष्टभ्नाति।प्रत्यष्टभ्नात्।प्रातितष्टंभ।प्रतिताष्टभ्यते।

* आश्रयाऽविदूरोर्ज्वेवाच्च ॥ ५१ ॥ अवा-द्गेरुत्तरस्य स्तंभेः षकारादेशो भवति आश्रये–अवि-दूरे ऊर्जि चार्थे । अवष्टभ्यास्ते । अवष्टब्धे सेने । अहो सुभटस्यावष्टंभः । एष्विति किं ? अवस्तब्धो वृषलः । चशब्दादुपष्टंभः ।

वेश्च स्वनोऽशने ॥ ५२ ॥ वेरवाच्चोत्तरस्य स्वनेः षो भवति—अशनेऽर्थे । विष्वणति । व्यष्वणत् । विषष्वाण । अवष्वणत् । अवषं-ष्वण्यते । अशन इति किं ? विस्वनति मृदंगः ।

* परिनिवेः सेवः ॥ ५३ ॥ एभ्यः सेवतेः

अटि चे च सत्यसत्यपि षो भवति । परिषेवते । पर्य्यषेवत । परिषिषेविषते । निषेवते । विषेवते । न्यषेवत् । व्यषेवत् ।

* **सितसयस्य** ॥ ५४ ॥ परिनिविभ्यः सित सययोः षो भवति । परिषितः । निषितः । विषितः । परिषयः । निषयः । विषयः ।

**सिवुसहसुट्स्तुस्वंजः** ॥ ५५ ॥ तेभ्यः सिवादीनां षो भवति । परिषीव्यति । निषीव्यति । विषीव्यति । परिषहते । निषहते । विषहते।परिष्कर्ता।नेमिमार्थं परिष्टौति।परिष्वजते।

**वाऽटि** ॥ ५६ ॥ तेभ्यः सिवादीनां अटि षो वा स्यात् । पर्य्यषीव्यत् । पर्यसीव्यत् । न्यसीव्यत् । न्यषीव्यत्।न्यषीव्यत् । व्यसीव्यत् । पर्य्यषहत । पर्यसहत । न्यषहत । न्यसहत । व्यषहत । व्यसहत । पर्य्यष्करोत् । पर्य्यस्करोत् । न्यष्करोत् । न्यस्करोत् । व्यष्करोत् । व्यस्करोत् । पर्य्यष्टौत् । पर्यस्तौत् । न्यष्टौत् । न्यस्तौत् । व्यष्टौत् । व्यष्टौत् । पर्यष्वजत् । पर्यस्वजत् । न्यष्वजत । न्यस्वजत् । व्यष्वजत् । व्यस्वजत् ।

* **स्यंदोऽभ्यनोश्चाऽजीवे** ॥ ५७ ॥ अभ्यनुभ्यां तेभ्यश्चोत्तरस्य स्यंदेः षो वा स्यादजीवेऽर्थे। अभिस्यंदते, अभिष्यंदते तैलं । अनुष्यंदते, अनुस्यंदते । परिस्यंदते, परिष्यंदते । निष्यंदते, निस्यंदते । विष्यंदते, विस्यंदते । अजीव इति किं ? अभिस्यंदते मत्स्यः ।

**वेः स्कंदोऽते** ॥ ५८ ॥ वेः परस्य स्कंदेर्वा षो भवति—अतसंज्ञके परतः । विष्कंत्ता । विस्कंता । अत इति किं?विस्कन्नः ।विस्कन्नवान् ।

**परेः** ॥५९॥ परेः परस्य स्कंदेर्वा षो भवति। परिष्कंत्ता, परिस्कंत्ता । पृथक्सूत्रात् तेऽपि स्यात् । परिष्कण्णः, परिस्कन्नः । परिष्कण्णवान्, परिस्कन्नवान् ।

**स्फुरिस्फुल्योर्निर्नेः** ॥ ६० ॥ निस्निभ्यां परयोः स्फुरिस्फुल्योः षो वा स्यात् । निःष्फुरति, निःस्फुरति । निष्फुरति, निस्फुरति । निःष्फुलति । निःस्फुलति । निष्फुलति,निस्फुलति ।

**वेः** ॥६१॥ वेरुत्तरयोस्तयोः षो वा स्यात् । विष्फुरति । विस्फुरति । विष्फुलति।विस्फुलति ।

***स्कभ्नः षः** ॥ ६२ ॥ वेःपरस्य स्कभ्नातेः षो भवति । विष्कभ्नाति । विष्कंभिता । विष्कंभकः । पुनः षो नित्यार्थः ।

**इणः षीध्वंलुङ्लिटां धो ढः** ॥ ६३ ॥ इणःपरेषां एषां धकारस्य ढो भवति । चेषीढ्वं । च्योषीढ्वं । अचेढ्वं।अच्योढ्वं।चकृढ्वे । ववृढ्वे। इण इति किं ? पक्षीध्वं । एषामिति किं? स्तुध्वे ।

* **वेण्मेः** ॥ ६४ ॥ इणः पराभ्यां इट्ञिभ्यां परेषां तेषां धकारस्य ढो वा स्यात् । लविषीढ्वं । लविषीध्वं । अलविढ्वं । अलविध्वं । लुलुविढ्वे । लुलुविध्वे । आहिषीढ्वं । आहिषीध्वं ।

**सेंऽगुलेः संगे** ॥ ६५ ॥ अंगुलेःपरस्य संगे सकारस्य से षो भवति । अंगुलिषंगः।से इति किं ? अंगुलेः संगः ।

**भीरोः स्थानं** ॥ ६६ ॥ भीरोः परस्य स्थानस्य से षो भवति । भीरुष्ठानं ।

**ज्योतिरायुषः स्तोमः** ॥ ६७ ॥ आभ्यां स्तोमस्य षो भवति से । ज्योतिष्टोमः। आयुष्टोमः।

* **स्तुच्चाग्नेः** ॥६८॥ अग्नेःपरयोःस्तुत्स्तोमयोः से षो भवति । अग्निष्टुत् । अग्निष्टोमः ।

**मातृपितुः स्वसुः** ॥ ६९ ॥ आभ्यां स्वसृ सकारस्य षो भवति से । मातृष्वसा।पितृष्वसा ।

**वाऽनुपि** ॥ ७० ॥ अनुपि से ताभ्यां स्वसुः षो वा स्यात् । मातुः ष्वसा । मातुः स्वसा । पितुः ष्वसा । पितुः स्वसा ।

* **प्रादुर्गेयच्यस्तेः** ॥ ७१ ॥ प्रादुःशब्दात्

गिभ्यश्च परस्यास्तेः षो भवति यकारादावजादौ च परे । प्रादुःष्यात् । प्रादुः षन्ति । निष्यात् । निषंति । अभिष्यात् । अभिषंति । प्रादुर्गेरिति किं ? दधि स्यात् । यऽचीति किं ? अनुस्वः । अनुसः ।

*निर्दुःसुवेः समसूतिस्वपोऽवः ॥ ७२ ॥ निरादिभ्यः परयोः समसूत्योः स्वपेश्चावका-रस्य षो भवति । निःषमः । दुःषमः । सुषमः । विषमः । निःषूतिः । दुःषूतिः । सुषूतिः । विषूतिः । निःषुप्तः । दुःषुप्तः । सुषुप्तः । विषुप्तः । अव इति किं ? दुःस्वप्नः ।

विकुशमीपरेः स्थलं ॥ ७३ ॥ एभ्यः स्थलस्य षो भवति । विष्ठलं । कुष्ठलं । शमीष्ठलं । परिष्ठलं ।

कपेर्गोत्रे ॥ ७४ ॥ कपेः स्थलस्य षो भवति गोत्रेऽर्थे । कपिष्ठलं । गोत्रे इति किं ? कपिस्थलं ।

गोंबांबभूमिसव्यापद्वित्रिकुशेकुशंकंऽगुमंजिपुंजिपरमेवर्हिर्दिव्यग्नेः स्थः ॥ ७५ ॥ एभ्यः स्थस्य षो भवति । गोष्ठः । अंबष्ठः । आंबष्ठः । भूमिष्ठः । सव्यष्ठः । अपष्ठः । द्विष्ठः । त्रिष्ठः । कुष्ठः । शेकुष्ठः । शंकुष्ठः । अंगुष्ठः । मंजिष्ठः । पुंजिष्ठः । परमेष्ठः । वर्हिष्ठः । दिविष्ठः । अग्निष्ठः ।

*प्रष्ठोऽग्रगत् ॥ ७६ ॥ प्रात्परस्य स्थस्य षो निपात्यते अग्रे गत्यर्थे । प्रष्ठो गौः । प्रस्थोऽन्यः ।

सुषामादिषु ॥७७॥ एषु वर्तमानस्य सकारस्य षो भवति । सुषामा । विषामा । निःषामा । निषेधः । सुषंधि । परमेष्ठी । सुष्ठिव्त्यादि ।

*प्रात्सुपस्त्ये ॥ ७८ ॥ प्रात्परस्य सकारस्य षत्वे स्यात् सुबंतात् विहिते तकारादौ त्ये परतः । सर्प्पिष्टा । सर्प्पिष्ट्वं । सर्प्पिष्टरं । वपुष्टमं । चतुष्टयं । प्रादिति किं ? गीस्तरा । धूस्तरा । सुप इति किं ? भिंधुस्तरां । छिंधुस्तरां । तादिग्रहणं किं ? सर्प्पिस्सात् । त्य इति किं ? सर्प्पिस्तरति ।

निसोऽनासेवायां तपे ॥ ७९ ॥ निसः षो भवति—अनासेवायामर्थे तपतौ परे । निष्टप्तं हिरण्यं । निष्टप्ता अरातयः । अनासेवायामिति किं ? निस्तपति सुवर्णो सुवर्णकारः ।

*निनद्याःस्नातेर्दाक्ष्ये ॥ ८० ॥ निनदीभ्यां स्नातेः षो भवति दाक्ष्येऽर्थे । निष्णः दाने । नदीष्णः प्रतरणे । कुशल इत्यर्थः ।

*प्रतेः स्नातं सूत्रे ॥८१॥ प्रतेःपरस्य स्नातेः षो भवति सूत्रेऽर्थे । प्रतिष्णातं सूत्रं शुद्धमित्यर्थः । प्रतिस्नातमन्यत् ।

÷स्नानं खौ ॥ ८२ ॥ प्रतेः स्नानस्य षो भवति सूत्रे खौ । पृतिष्णानं सूत्रमित्यर्थः । खाविति किं ? पृतिस्नानं ।

*वर्णेऽभिनिष्टानः ॥ ८३ ॥ वर्णे खौ अभिनिभ्यां स्तानस्य षो निपात्यः । अभिनिष्टानो विसर्गः । अभिनिस्तानोऽन्यत्र ।

*विष्टारश्छंदसि ॥८४॥ वेः परस्य स्तारस्य षो निपात्यते छंदोऽर्थे खौ । विष्टारःपंक्तिछंदः । विस्तारोऽन्यत्र ।

*वृक्षासने विष्टरः ॥८५॥ वेः परस्य तरस्य षो निपात्यते वृक्षासनयोरर्थयोः । विष्टरो वृक्षः । विष्टरमासनं । विस्तरोऽन्यः ।

*गवियुधि स्थिरः ॥८६॥ गवि युधि इत्येताभ्यां स्थिरस्य षो भवति खौ । गविष्ठिरः । युधिष्ठिरः ।

*एत्यऽगः ॥८७॥ अगकारांतात्परस्य सकारस्य षो भवत्येकारे परतः खौ । वारिषेणः । श्रीषेणः । हरिषेणः । एतीति किं ? हरिसिंहः । अग इति किं ? विष्वक्सेनः । इण इति किं ? धर्मसेनाचार्य्यः

+भाद्वा ॥ ८८ ॥ भवाचिनः शब्दात् सकारस्य षो वा भवति एकारे खौ । भरणिषेणः । भरणिसेनः । रोहिणिषेणः । रोहिणिसेनः । अग इति किं ? अश्वयुक्सेनः ॥

* पदांत ॥८९॥ पदांतरस्य सकारस्य षो न स्यात् । दधि सिंचति । मधु सुनोति ।

* बहोः ॥९०॥ बहोस्त्यातस्य षो न स्यात् । बहुसेक् ।

सात् ॥ ९१ ॥ सातः सस्य षो न स्यात् । मुनिसात् । अग्निसात् । दधिसात् । मधुसात् ।

सिचो यङि ॥ ९२ ॥ सिचेः सस्य षो न भवति यङि परतः । सेसिच्यते। अभिसेसिच्यते।

सेधो गतौ ॥ ९३ ॥ सेधतेर्गत्यर्थस्य षो न स्यात् । प्रतिसेध गाः । अभिसेध गाः। गताविति किं ? प्रतिषेधति पापं मुनिः ।

निस्तब्धप्रतिस्तब्धौ ॥ ९४ ॥ निप्रतिभ्यां स्तंभेः षत्वाभावो निपात्यते । निस्तब्धः। प्रतिस्तब्धः । ॥

सोढः॥९५॥ सोढभूतस्य सहेःषो न स्यात्। विसोढा । परिसोढुं । परिसोढव्यं । सोढ्भूतस्येति किं ? निषहते । विषहते ।

* स्तंभुसिवुसहञ्चाचि ॥ ९६ ॥ एषां कचि परतः षत्वं नास्ति । प्रत्यतस्तंभत् । पर्यसीषिवत्। व्यसीषहत् ।

सुञः सन्स्ये ॥ ९७ ॥ सुञः सनि स्ये च परतः षकारादेशो न स्यात् । सुसूषतीति सुसूः । अभिसोष्यति ।

सत्स्वंजश्चाल्लिटि ॥९८ ॥ सहिस्वंज्योः चात्परयोर्ल्लिटि परतः षो न स्यात् । निषसाद । अभिषस्वंजे । अभिषस्वजे ॥

* षृो नो णोऽभिन्ने ॥ ९९ ॥ षकाररेफाभ्यां परस्य नकारस्य णत्वं भवत्यभिन्नपदे चेत्तौ निमित्तनिमित्तिनौ भवतः । कृष्णाति । पुष्णाति। निष्केण । मूर्ऌेण । वर्गेण । दीर्घेण । पुष्येण । रेफेण । गिरिणा । मेरुणा । वर्षेण।गर्वेण । गर्भेण । अभिन्न इति किं ? मुनिर्नयति स्वर्गं ॥

* प्राक्पदस्थात् खौ ॥ १०० ॥ पूर्वपदस्थात्परस्य नकारस्य णकारादेशो भवति खौ । पुष्पणंदी । वीरणंदी । धर्मणंदी । श्रीणंदी स्त्री । खाविति किं ? दीर्घनासिकः ।

* अगः ॥ १०१ ॥ गकारांतान्नकारस्य णो न भवति । ऋगयनं ।

*कोटराभ्यो वनं ॥ १०२ ॥ कोटरादिभ्यः परं वनं विनियम्यते खौ । कोटरावणं । मिश्रकावणं । सिधूकावणं । सारिकावणं । पुरगावणं । एभ्य इति किं?शतपत्रवनं । मनोहरवनं ।

प्रोंग्र्यतर्निःशरेक्षुप्लक्षपीयूक्षाकार्श्याम्रखदिरात् ॥ १०३ ॥ एभ्यो वननकारस्य णो भवति । प्रवणं । अग्रेवणं । अंतर्वणं । निर्वणं । शरवणं । इक्षुवणं । प्लक्षवणं । पीयूक्षावणं । कार्श्य वणं । आम्रवणं । खदिरवणं ॥

* द्वित्र्यज्भ्यो वृक्षौषधिभ्योऽनिरीकादिभ्यो वा ॥ १०४ ॥ द्वित्र्यज्भ्यो वृक्षौषधिवाचिभ्यः निरीकादिरहितेभ्यो वनस्य नस्य णो वा स्यात् । दारुवणं,दारुवनं।वदरीवणं,वदरीवनं । दूर्वावणं । दूर्वावनं । व्रीहिवणं, व्रीहिवनं । कोद्रववणं, कोद्रववनं । द्वित्र्यज्भ्य इति किं?देवदारुवनं । भद्रदारुवनं । राजमाषवनं ।वृक्षौषधिभ्यः इति किं ! पितृवनं । अनिरीकादिभ्य इति किं ? इरीकावनं कुवेरवनं । तिमिरवनं । समीरवनं ।

+ ग्रामाऽग्रान्नीः ॥ १०५ ॥ आभ्यां नी नकारस्य णो भवति । ग्रामणीः । अग्रणीः ।

* नसः ॥ १०६ ॥ गेः परो नसो णकारादेशो भवति । प्रगता नासिका अस्य-प्रणसं मुखं। निर्णसः ।

अतोऽन्हः ॥ १०७ ॥ अकारांतात्परस्याह्नः नस्य णत्वं भवति।पूर्वाह्णः।अपराह्णः।अत इति किं? निरह्नः । दुरन्हः ।

**चतुस्त्रेर्वयसि हायनः** ॥ १०८ ॥ चतुर् त्रिभ्यां हायनस्य नस्य णो भवति वयसि गम्यमाने। चतुर्हायणो वत्सः । त्रिहायणोऽश्वः । चतुस्त्रेरिति किं?लक्षहायनःपक्षी।वयसीति किं?चतुर्हायना शाला।

**वाह्याद्वाहनं** ॥ १०९ ॥ वाह्यात्परस्य वाहननकारस्य णो भवति । इक्षुवाहणं । शरवाहणं। वाह्यादिति किं ? सुरवाहनं ।

**पानं देशेऽसेः** ॥ ११० ॥ देशे गम्यमाने पानस्य णकारादेशो भवति-असेः । क्षीरपाणाः आंध्राः । सौवीरपाणाः द्राविडाः । सुरापाणाः प्राच्याः । देशे इति किं ? दाक्षिपानं । असेरिति किं ? सर्पिष्पानाः ।

**वा भावकरणे** ॥ १११ ॥ भावे करणे च वर्तमानस्य पाननस्य णो वा स्यात् । सौवीरपाणं, सौवीरपानं । क्षीरपाणं, क्षीरपानं, वर्त्तते । करणे—क्षीरपाणः, क्षीरपानः । वारिपाणः, वारिपानः कंसः। भावकरण इति किं ? क्षीरपानो घोषः ।

**गिरिनद्यादीनां** ॥ ११२ ॥ एषां वा णो भवति । गिरिणदी । गिरिनदी । चक्रणितंबा। चक्रनितंबा । माषोणः । माषोनः ।

**मृदंतनुमसुपि** ॥११३॥मृदंते नुमि सुपि च यो नकारस्तस्य वा णो भवति। माषवापिणौ,माषवापिनौ । व्रीहिवापिणौ, व्रीहिवापिनौ । माषवापाणि । माषवापानि । व्रीहिवापाणि । व्रीहिवापानि । माषवापेण, माषवापेन । प्राक्पदस्थात्वादिति किं ? कूपवारिणा ।

**एकाज्धौ णः** ॥ ११४ ॥ एकाचि धौ स्थितस्य मृदंतनुमसुब्नकारस्य णो भवति । ब्रह्महणौ । वृत्रहणौ । क्षीरपाणि । सुरापाणि । सुरापेण । क्षीरपेण ।

**सकधौ** ॥ ११५ ॥ सकवर्गे धौ स्थितस्य मृदंतनुमसुब्नकारस्य णो भवति । मोक्षकामिणौ । स्वयुगिणौ।स्वर्गकामाणि । करगुमाणि । गुरुसुखेण । करयुगेण ।

**ण्यंऽतरोऽहुरो विकृतेः** ॥ ११६ ॥ दुर्वर्जितात्द्वेरंतःशब्दाच्च विकृतेर्नकारस्य णो भवति । पार्श्वजिनं प्रणमामि । प्रणयति । परिणयति । अंतर्णयति । प्रणामकः । परिणायकः । ण्यंतर इति किं ? साधुर्नयति स्वर्गे । अदुर इति किं? दुर्नयः । विकृतेरिति किं ? प्रनृत्यति । प्रनर्त्तकः ।

**शः** ॥ ११७ ॥ गेरदुरोऽन्तःशब्दाच्च शकारांतस्य धोर्नस्य णो भवति । प्रणश्यति । परिणश्यति । प्रणाशकः । श इति किं ? प्रनष्टः । प्रनंक्ष्यति ।

**हिम्योर्नुनोः** ॥ ११८॥ गेरदुरोऽतःशब्दाच्च हिमीभ्यां नुना इत्येतयोर्णो भवति । प्रहिणोति । प्रहिणुतः । प्रमीणाति । प्रमीणीतः ।

**आनेः** ॥ ११९ ॥ गेः परस्यानेर्णो भवति। प्रयाणि । प्रापयाणि । अंतर्याणि । प्रवाणि ।

**नेर्गदनदपतपद्घुमास्यतियातिवातिद्रातिप्सातिवपतिवहतिशमुचिञ्देग्धौ** ॥ १२० ॥ गेः परस्य नेर्णो भवति गदादिषु परतः । प्रणिगदति । प्रणिगदिता । परिणिगदति । परिणिगदिता । प्रणिनदति । वीरनाथं प्रणिपतामि । प्रणिपद्यते । प्रणिपत्ता। प्रणिददाति । प्रणिदधाति । प्रणिधयति । प्रणिदधाति । प्रणिमयते। प्रणिमिमीते । प्रणिमारयते । प्रणिमाता । प्रणिष्यति । परिणिष्यति । प्रणिहंति । प्रणियाति।प्रणिवाति। प्रणिद्राति । प्रणिप्साति । प्रणिवपति । प्रणिवहति । प्रणिशाम्यति । प्रणिचिनोति । प्रणिदेग्धि । अंतर्णिगदति ।

**शेषे वाऽषांतेऽकखादौ** ॥ १२१ ॥ शेषे गदादिवर्जिते धौ अषकारांते अककारखकारादौ

नेर्वा णो भवति । प्रणिपचति । प्रनिपचति । परिणिभिनत्ति । परिनिभिनत्ति । अषांत इति किं ? प्रनिपिनष्टि । अकखादाविति किं ? प्रनिकरोति । प्रनिखनति । अंतादिग्रहणमुपदेशार्थं । प्रनिपेक्ष्यति । प्रनिचकार । प्रनिचखाद ।

इतोऽनितेः ॥ १२२॥ इकारांताद्गेः परस्यानितेर्णो वा स्यात् । पर्यणिति । पर्यनिति । इत इति किं ? प्राणिति ।

अंते च ॥ १२३ ॥ गेः परस्यानितेर्णो भवस्यंतेऽनंते च ।पराणिते । हे प्राण ।

द्वौ ॥ १२४ ॥ गेरनितेर्द्वौ नकारौ विनियम्येते । प्राणिणिषति। पराणिणिषति । प्राणिसात् । पराणिणत् । द्वाविति किं? प्राणिणिनिषत्।

घ्नः ॥ १२५ ॥ गेः परस्य हंतेर्णो भवति। प्रहण्यते । परिहण्यते । प्रहणनं । परिहणनं ।

वा म्वोः ॥ १२६ ॥ गेर्हतेर्णो वा स्यात् मकारवकारयोः परतः । प्रहण्वः । प्रहण्मः । प्रहन्वः । प्रहन्मः ।

कृत्यऽचोऽभाभूपूक्कमूगमप्यायीवेपोऽषः ॥ १२७ ॥ अषकारांताद्गेः पराद्भादिवर्जिताद्धोः परस्य कृत्स्थनकारस्याचः परस्य णो भवति । प्रयाणं । परियाणीयं । प्रवहणं । प्रहीणः । प्रहीणवान् । कृतीति किं? प्रवाहेन । अच इति किं? प्रभुग्नः । प्रभुग्नवान् । अभादेरिति किं? प्रभानं । परिभानं । परिभवनं । प्रभवनं । प्रपवनं । प्रक्रमनं । प्रगमनं । प्रप्यायनं।प्रवेपनं। अष इति किं? निष्पानं । दुष्पानं ।

नुमीऽजादेरेव ॥ १२८ ॥ गेः परस्य धोः इजादेरेव नुमि सति कृत्स्थनकारस्य णो भवति । प्रेङ्खणं । परेङ्खणं । प्रेंगणं । अंतरिंखणं । नुमीति किं ? नुम्यसति न नियमः। प्रवहणं । इजादेरिति किं ? प्रमंकनं। प्रमंगनं । इष्टनियमार्थमेवकारः। नुम्येवेजादेरिति मा भूत् -प्रोहणं ।

णिहलिजुक्को वा ॥ १२९॥ ण्यंतात् हलः परात् इजुक्श्च धोः कृत्नकारस्य गेः परस्य वा णो भवति । प्रयापणं । प्रयापनं । प्रयाप्यमाणं । प्रयाप्यमानं । प्रकोपणं । प्रकोपनं । प्रमोहणं । प्रमोहनं । हल्ग्रहणं किं? प्रेहणं । परोहणं । इजुक इति किं ? प्रवहणं । अभादेरिति किं ? प्रभावना । प्रभावना । प्रयावना । प्रक्रामना ।

निसनिक्षनिंदां ॥ १३० ॥ गेरदुरोऽतश्च परेषां निसादीनां कृति परे णो वा भवति । प्रणिंसनं । प्रनिंसनं । प्रणिंक्षनं, प्रनिंक्षनं । प्रणिंदनं, प्रनिंदनं ।

निर्विण्णः ॥ १३१ ॥ निस्पूर्वाद्विदः परस्य कृन्नकारस्य णो निपात्यः। निर्विण्णः प्राव्राजीत्।

नाऽतरोऽयनघ्नो देशे ॥ १३२ ॥ अंतर शब्दात्परस्य अयनस्य हंतेश्च णो न स्यात् देशेऽर्थे । अंतरयनः । अंतर्हनः देशः । देश इति किं ? अंतरयणं ।

श्चुल्टुस्तौ मध्ये ॥ १३३ ॥ शकारे चवर्गे लकारे टवर्गे सकारे तवर्गे च निमित्तनिमित्तिनोर्मध्ये सति णत्वं न स्यात् । रशना । निरशनं । अर्चना । मूर्छना । उपार्जनं । वृषलेन । पृष्टेन । दृढेन । मर्द्दनं । दार्ढ्येन । रसेन । वर्त्तनं । तीर्थेन । प्रमर्द्दनं । प्रवर्द्धनं ।

पदेऽनाङ्न्यऽहृति ॥ १३४ ॥ आङ्हीने पदे मध्ये सति णो नास्त्यहृति । प्रावनद्ध । माषकुंभवापेन । चतुरंगयोगेन । अनाङीति किं? पर्याणद्धं । निर्णीतं ।अहृतीति किं? आर्द्रगोमयेण।

घि घ्नः ॥ १३५॥ घेर्मध्ये सति हंतेर्णो न स्यात् । प्रघ्नंति । प्रघ्नः । घीति किं ? प्रहणः ।

क्षुभ्नाद्यंतेषु ॥ १३६ ॥ क्षुभ्नादिषु यदंते च नकारस्य णो न स्यात् ।क्षुभ्नाति । क्षुभ्नीतः ।

तृप्णोति । तृप्नुतः । सुरनदी । हरिनंदनः । श्रीनन्दीत्यादि । नरान् । माषान् । दोषान् ।

नृतेर्यङि ॥ १३७ ॥ नृतेर्यङि णो नास्ति। नरीनृत्यते । नर्नर्ति ।

स्तोः श्चुना श्चुः ॥१३८॥ सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ भवतः । कश्शेते । जिनालयश्शोभते । तपश्चरति । धन्याश्चिनोति पुण्यं । मुनिश्छिनत्ति पापबंधं। त्वच्छय्या । तच्चरति ।तच्छचति । तज्जयति । तज्झकारः । तञ्जकारेण । राज्ञः । याञ्चा ।

ष्टुना ष्टुः ॥ १३९ ॥ स्तोः सकारतवर्गयोः षकारटवर्गाभ्यां योगे षकारटवर्गौ स्तः । कष्षडिकः । कष्टीकते । पुरुषष्टकयति । पेष्टा । तट्टीकते । तट्ठकारेण । तड्डीनं । तड्ढौकते । भवाण्णकारीयति ।

टोर्नाम्नगरीनवतेः ॥ १४० ॥ पदांताट्टोः परेषां एषां तोष्टुर्भवति । षण्णां । षण्णगरी । षण्णवतिः । नियमार्थोऽयं योगः--पदांताट्टोरेषामेव टुर्नान्यस्य । षट्तयं । षट्त्वं । षट्ता । मधुलिट् सीदति नरके।तत्वामृतलिट् तरति दुःखं।

न तोष्वि ॥१४१॥ षकारे परे तवर्गस्य णास्ति । तीर्थकृत्षोडशः । महान्षंडः । षीति किं ? तट्टकारः ।

शात् ॥१४२॥ शकारात्तो श्चुर्न स्यात् । अश्नाति । प्रश्नः ।

यरो ङो वा ङे॥१४३॥ यरःपदांतस्य ङे परे ङो वा भवति । वाङ्मधुरः । वाग्मधुरः । अञ्नीति । अज्नीतिः। षण्मुखानि। षड्मुखानि तन्नयनं । तद्नयनं । ककुम्मंडलं । ककुब्मंडलं । ङ इति किं ? गुरुवाक्प्रमाणं ।

स्ये ॥१४४॥ यरः ङसंज्ञकादौ स्ये परे नित्यं ङादेशो भवति।वाङ्मयं।भवन्मयः।तन्मात्रं ।

रीस्योः ॥१४५॥ पदांतयोः रीस्योः पूर्वस्य स्वासञ्नो ङो भवति। नृँ:पाहि । पुँस्कोकिलः। पुँस्कामा ।

खय् खयः शरि॥१४६॥ खयः खय् वा स्यात् शरि परतः । क्षीरं । क्षीरं । अफ्सरा । अप्सरा । खय इति किं?भवान्साधुः।शरीति किं?वाक् चरति।

शरि द्वे ॥१४७॥ शरः परस्य खयः द्वे रूपे वा स्तः । कच्छादयति । कश्छादयति । स्थ्थाली । स्थाली ।

यणो मयः ॥१४८॥ यणः परस्य मयो वा द्वे स्तः । दीर्घ्घः। दीर्घः । वाल्म्मीकः,वाल्मीकः । अथवा-मयः परस्य यणो द्वे स्तः । दद्ध्य्यत्र । दद्ध्यत्र, दध्यत्र । मद्ध्व्वत्र । मध्वत्र । मद्ध्वत्र।

अचो र्होऽर्हचः ॥१४९॥ अचः पराभ्यां रेफहकाराभ्यां परस्य रेफहकाराज्वर्जितस्य वर्णस्य द्वे वा स्तः।आर्य्यः। आर्यः । वाह्य्यं । वाह्यं । अच इति किं?ह्नुते । अर्हच इति किं ? अर्हः । श्रीह्रदः । वीरः ।

अयः ॥१५०॥ अदीसंज्ञकादचः परस्य द्वे वा स्तः । पथ्यदनं । पत्थ्यदनं । त्वक्, त्वक्क् । त्वग्ग्, त्वग् । तत् । तत् । तद् । तद् । अय इति किं ? पात्रं ।

न स्फेऽचि ॥ १५१ ॥ स्फसंज्ञे अचि च परे अर्हचो द्वे रूपे न स्तः। इंद्रः।कृत्स्नं।दधि।मधु ।

शरः ॥१५२॥ शरोऽचि द्वे न स्तः। आदर्शः। वर्षः । तर्सः । अचीति किं ? वर्ष्ष्यते ।

पुत्रस्यादिन्पुत्रादिन्याक्रोशे ॥ १५३ ॥ आदिनि पुत्रादिनि च परे पुत्रस्याक्रोशे द्वे न स्त आक्रोशविषये । पुत्रादिनी । पुत्रपुत्रादिनी त्वमसि पापे । आक्रोश इति किं ? पुत्रादिनी । पुत्रपुत्रादिनी शिशुमारी ।

झलो जश् झशि॥१५४॥झलां वर्णानां जश्

